॥ श्रीः ॥

आनन्दवनविद्योतिसुमनोभिः सुसंस्कृता ।
सुवर्णाऽङ्कितभव्याभशतपत्रपरिष्कृता ॥ १ ॥
चौखम्बा-संस्कृतग्रन्थमाला मञ्जुलदर्शना ।
रसिकालिकुलं कुर्यादमन्दाऽऽमोदमोहितम् ॥ २

स्तबकः—४१०

THE

# CHOWKHAMBA SANSKRIT SERIES
# NO. 410.

THE

# SAJJANENDRA PRAYŌGAKALPADRUMA

*OF*

KRIṢṆA PANDIT DHARMĀDHIKĀRĪ

*Edited*

*With an Introduction etc.,*

*By*

*Pandit Anantarām S'āstrī Vetāl*
SĀHITYOPĀDHYĀYA
Sanskrit Teacher, Udai Pratāp College
Benares.



JAI KRISHNADAS-HARIDAS GUPTA,
*The Chowkhamba Sanskrit Series office,*
*Benares City.*

1933.

❀ श्रीः ❀

चौखम्बा-संस्कृत-ग्रन्थमाला

ग्रन्थ-संख्या ७०

नं० ४१०.

# सज्जनेन्द्रप्रयोगकल्पद्रुमः

धर्माधिकारिकृष्णपण्डितविरचितः

उदयप्रतापविद्यालयाध्यापकेन

साहित्योपाध्यायेन

अनन्तरामशास्त्रिवेतालेन

भूमिकादिभिः सम्भूष्य संशोधितः ।

प्रकाशकः—

जयकृष्णदास-हरिदास गुप्तः-

चौखम्बा संस्कृत सीरिज़ आफिस,

विद्याविलास प्रेस, बनारस सिटी ।

१९९०

॥ श्रीः ॥

# समर्पणम् ।

श्रीमत्सूदयपत्तनोज्ज्वलमहीरत्नेषु हीरायितो-

ऽस्मत्सम्बन्धनिबन्धमूलपुरुषः श्री**शम्भुसिंहा**भिधः ॥

साक्षाच्छम्भुरिवापरः समुदभूद् राजा ततः **सज्जनो**

मानी सज्जनवृन्दकैरववनीचन्द्रोऽवनीन्द्रोऽभवत् ॥ १ ॥

भास्वद्वंशसरोजवासरमणेर्भूभृन्मणेः सज्जना-

ज्जज्ञे शारदशर्वरीशविशदश्लोकः श्रियामाश्रयः ॥

धैर्यौदार्यदयालयः **फतह**भूपालः प्रतापोज्ज्वलो

राजा तत्तनुजोऽधुना विजयते **भूपालसिंहो** भवान् ॥२॥

स्वस्ति स्तात् प्रसरत्प्रतापतपनप्रोद्यत्प्रभामण्डल !

क्षोणीमण्डन**मेदपाट**धरणीसाम्राज्यधूर्धारिणे ॥

भूस्वामिन् ! भवते प्रयच्छतु शिवं सत्पुत्रपौत्रप्रदं

दीर्घायुर्जननं शिवः स भगवान् नाम्नै**कलिङ्गेश्वरः** ॥ ३ ॥

पूज्योऽस्मज्जनको **विनायक**सुधीर्**वैताल**वंशार्यमा

काव्यव्याकृतिनीतिमन्त्रकुशलो दैवज्ञवाचस्पतिः ॥

भूपाल ! प्रपितामहेन भवतः श्री**शम्भुसिंहा**ह्वये-

नाहूतो गुणशालिनोदयपुरं विद्याभिवृद्ध्यै गतः ॥ ४ ॥

तत्रासौ किल **शम्भुसिंह**नृपतिं श्री**सज्जनेशं** ततो
भूपेन्द्रं **फतहं** पुनर्गुणविदं सन्तोष्य तैस्तैर्गुणैः ॥
सम्प्राप्योद**यपत्तने** क्षितिभुजां तेषामुदाराश्रयं
निन्येऽष्टादश हायनानि मतिमान् मानी मनस्वी मुदा ॥५॥

निर्मायो**दयवंशवर्णन**ममुं सम्बन्धमुज्जीवयन्
राजेन्द्रं **फतहं** प्रसाद्य च गुणैः श्रीमत्कृपाभाजनम् ॥
ज्योतिस्तन्त्रकलाकलापकुशलः **श्रीनाथशास्त्री** सुधी-
रस्मज्ज्येष्ठसहोदरोऽपि कुरुते श्रीमच्छुभाशंसनम् ॥ ६ ॥

आश्रित्योन्नतकीर्ति**सज्जन**नृपं तन्नाममुद्राङ्कितो-
ऽस्मन्मातामह**कृष्णपन्त**विदुषोद्यत्प्रातिभज्योतिषा ॥
श्रीमत्सज्जनमान्य**सज्जन**यशोवल्लीविलासास्पदं
तेने व्याकरणप्रयोगरुचिरस्तेनेह **कल्पद्रुमः** ॥ ७ ॥

सम्बन्धत्रयमाकलय्य तदिदं **भूपाल** भूपाल हे !
दिव्यं काव्यमयं तदन्वयजनुर्लक्ष्मीवते श्रीमते ॥
रत्नं श्रीम**दनन्तराम**सुकृती वैनायकिः काशिकः
सप्रेमार्पयते, तदेतदधुना स्वर्णेन सङ्गच्छताम् ॥ ८ ॥

॥ श्रीः ॥

# प्रास्ताविकम्

उपक्रमः अथेदानीं मुद्रयित्वा प्रकाशं नीयते श्रीमत्पूज्यवरधर्माधिकारिकृष्णपन्तपण्डितविरचितः **सज्जनेन्द्रप्रयोगकल्पद्रुमो** नाम ग्रन्थोऽयं 'चौखम्बा-संस्कृत-सीरीज' ग्रन्थमालायाम् । सर्वत्र मालायां कुसुमानि प्रकाश्यन्ते लोके, अस्यां तु ग्रन्थमालायां प्रयोगकल्पद्रुमोऽयमधुना प्रकाशितो भवतीति किञ्चिद्विचित्रमिव प्रतीयते । किन्तु विचारानन्तरं नैतदाश्चर्यकरं प्रतिभायात् प्रेक्षावतां चित्ते । मालायां किल कुसुमोपसङ्ग्रहे समुन्नवति तत्र परं परस्परं कोऽपि शोभातिरेकः, कुसुमापगमे च भवति सौन्दर्यहानिरिति प्रयोगकल्पद्रुमोऽयं ग्रन्थमालामिमां प्रसरत्प्रकटप्रसूनसौरभसम्भारसम्भृतामछलभां सम्भाव्य चिरतिथात्समयादिह प्रकाशीभवितुमीहमानः साम्प्रतं जात्यैकरूपतां प्राप्तः पञ्चभिः कुसुमैः समं प्रकाशरूपतामासाद्य लब्धमहिमा नूनं सफलजन्मा सञ्जातः ! अस्तु नाम, प्रकृतमनुसरामः ।

श्रीकाश्यां प्रतिग्रहं विनाल्पयापि वृत्त्या सुखं जीवनस्य निर्वाहः स्यादित्याशयेन तदर्थपरिपूरकं श्रीमदार्यकुलकमलदिवाकरं **मेदपाटोर्वीसार्वभौमं** तात्कालिकोदयपुरनरेशं श्रीमन्तं **सज्जनसिंह**नामानमन्वर्थनामानं गुणधामानं भूपतिवरं सादरं समुपसृत्य वर्णनीयत्वेन तमेव प्रस्तुत्य **सज्जनेन्द्रप्रयोगकल्पद्रुम** इति तन्नाममुद्राङ्कितं ग्रन्थमेनमुदयपुरे विरचयाञ्चकार श्रीमान् ग्रन्थकारमहोदयः(१) समर्पयाञ्चकार च प्रीतिपुरस्सरं तस्मा एव भूपतिरत्नाय ।

स चायं ग्रन्थो गृह एव **विनायकसरस्वतीभवन**पुस्तकालये विद्यमान एकस्मिन्दिवसे सहसा नयनगोचरतां गतः पर्यालोचितो निजगुणगौरवेण बलादिव प्रेरयन्मां मुद्रणोचितकर्मणि । अद्य किल श्रीकाशीविश्वेश्वरानुग्रहेण श्रीमदेकलिङ्गेश्वरप्रेरणया समवसन्ने मुद्रणकार्ये विदुषां पुरस्तादुपस्थितो भवतीति परमं प्रमोदस्थानम् । अपूर्वे सुन्दरतमे ग्रन्थरत्नेऽस्मिन् सति मुद्रिते न केवलं हर्षावाप्तिः, किन्तु तन्मुद्रणमवश्यकर्तव्यमेवासीदस्माकम् । तथा हि—

उदयपुरराजकुलसम्बन्धप्रदर्शनम् उदयपुरे किल सम्बन्धोऽस्माकं श्रीमन्महाराणानृपतिवरश्रीशम्भुसिंहसमयात् प्रचलितोऽद्यापि विद्यमान एवास्ते केनापि रूपेण । अयं हि श्रीमान् विद्वत्प्रियो विद्वान् श्रीशम्भुसिंहवर्मा धर्मात्मा

(१) द्रष्टव्यतां ४६ पृष्ठे 'आविमुक्तो मेदपाटे' इति, ८६ पृष्ठे च 'प्रतिग्रहकृतिं विना' इति ।

नरपालोऽस्मत्तातपादान् सद्गुणगणालङ्कारदीप्तद्युतीन् पूज्यवरविद्वद्वरश्रीविनायक-शास्त्रिवेतालमहोदयान् ससत्कारमुदयपुरे समाहूय गुणग्राहितया प्रत्यतिष्ठिपत् सानन्दं प्रधानाध्यापकपदे महाराणास्कूलनामके विद्यालये । तत्र च कार्यं पाठशालीयं यथोचितमाचरन्तः समये समये गोलविद्याचमत्कारं यथार्थं प्रत्यक्षतो दर्शयित्वा लब्ध्वा च सर्वतः साधुवादपुरस्सरं बहुतरं सत्कारसम्भारं तत्र ते सानन्दमत्यवीवहन् दिवसान् । अयं च राजा त्रयोदश वत्सरान् यावद् यथावदलमकार्षीद्राज्यपदमनुरञ्जयन् जनानां मनः सर्वथा । तदनु सज्जनः सज्जनमान्यो राजा श्रीसज्जनसिंहो नाम राजति स्म तस्मिन् राज्यपदे । अयमेव तावद् भूपालचूडामणिर्वर्णनीयो ग्रन्थकारस्य । सद्गुणोपेतमेतमपि क्षितिपालं नयपालं छतरां समतूतुषन् स्वकीयविद्यागुणगौरवेण पूज्याः पितृवराः श्रीमन्तः । एतेन खलु गुणिना भूपालमणिना समुपभुज्यात्यल्पमेव दशवार्षिकं राज्यसुखमनल्पं यशः सर्वतो विस्तारितं दिगन्तरेषु । तदनन्तरं नयविनयदयाविवेकधामा सुगृहीतनामा महामहिमसम्पन्नः प्रभावशाली विजयी सत्यसन्धो महोत्साहः श्रीमान् फतहसिंहो नाम राजा बुभोज पैतृकं राज्यम् । एतस्य भूपते राज्याभिषेकमहोत्सवसम्भारो हि सन्मुहूर्तोत्तमे दिने पूज्यवरश्रीमत्पितृचरणैरेव यथाविधि सम्पादितः सन् परमां प्रत्यपद्यत शोभाम् । राजानमेनमपि दर्शयित्वा यथासमयं ज्योतिर्विद्याचमत्कारान् सर्वतः सन्तोष्य सम्पाद्य च तत्र भूयसः शिष्यान् कुर्वन्तः पाठशालीयमपि कार्यं समधिगम्य नैकविधान् राजकीयान्सम्मानान् श्रीमद्विश्वेश्वरचरणारविन्दद्वन्द्वमिलिन्दायमानमानसाः सन्तः सन्त्यज्य ताम् उदयपुरराजधानीं समागच्छन् । पूज्यतमास्तातचरणाः श्रीमतीं श्रीविश्वेश्वरराजधानीं मोक्षनगरीं गरीयसीं वाराणसीम् । इत्थं च पूर्वोक्तां राजत्रयीमाश्रित्य सप्रमोदमयापयन्नष्टादश वत्सरान् श्रीविनायकशास्त्रिवेतालपूज्यपादा उदयपुरे ।

तदनन्तरमस्मत्सहोदराः पूज्यवराः श्रीनाथशास्त्रिणोऽपि सम्बन्धमेनमनुचिन्त्य पैतृकं, तत्प्रकाशनं तेन सहैव जीवनदायिनां दिगन्तविश्रान्तयशसां उदयपुरवसुन्धरापुरन्दराणां तेषां गुणानुवर्णनं च मत्वा कार्यमिव स्वकीयं, तद्राजधानीमूलपुरुषाच्छ्रीमदुदयसिंहभूपतेरारभ्य श्रीमत्फतहसिंहवर्माणं यावत् सूर्यवंशीयराजपरम्परावदातचरितानि सरसपद्यबन्धेन काव्येन वर्णयित्वा मुद्रयित्वा च तत् खण्डकाव्यम् उदयान्वयवर्णनं नाम सादरं समर्पयाम्बभूवुस्तस्मै राजरत्नाय श्रीफतहसिंहभूपतये । यथाकालं च तत्रोपस्थाय संवर्धयाम्बभूवुराशीर्वादश्लोकैरमुं महीपालरत्नावलीहीरायमाणम् । प्रकृतिप्रियश्चैष पार्थिवो नीतिपूर्वकं चक्रे राज्यशासनं सम्यक् पञ्चचत्वारिंशद्वर्षावधि । ततो वत्सरे तुरङ्गवस्वङ्कशशाङ्क(१९८७)-संज्ञे तत्साम्राज्यसिंहासने समासीनो मतिमान् सद्गुणगणालङ्कृतो विद्याविनयशाली नीतिज्ञो बभूव भूपालः श्रीमान् श्रीभूपालसिंहवर्मा नाम सद्धर्मधुरन्धरः ।

उदयपुरमहीरत्नमिदं रत्नगर्भायां विराजमानमधुना लब्धमानं सुचिरं चकास्तु रुचिरं रुचिमत् । गुणवतोऽमुष्य भूपालसिंहवर्मनाम्नो भूपालसिंहस्यापि समासाद्य दर्शन-सौभाग्यं यथासमयं समुचितैः शुभाशंसनैर्भूयसीं कृपापात्रतां समपादयन् पूज्यवराः श्रीमद्भ्रातृचरणाः । समुपस्थिते सति भूभृन्मणेरस्य महात्मनो राज्यसिंहासना-धिरोहणमहोत्सवे समुपस्थितमासीदस्माभिरपि तत्राशीर्वचनपद्यैरभिनन्दितोऽसौ सोत्साहं महीपालसिंहः । प्रथममेवेदमासीदस्माकमुदयपुरनरेन्द्रदर्शनम् ।

इत्थंविधममुं पूर्वपरम्परानुगतं सम्बन्धविशेषमनुबध्य मानसे समनुचिन्त्य च पूज्यवरमातामहश्रीमत्कृष्णपण्डितविरचितस्यैतद्ग्रन्थस्याप्युपादेयतामुपयोगितां तन्मुद्रणमवश्यं कर्तव्यमिति तत्र सोत्साहं प्रवृत्तमस्माभिः । मुद्रितश्चेदानीं तत्कुल-जन्मानुपमेयापरिमेयश्रीमते श्रीमते श्रीमद्भूपालसिंहभूपालमहोदयाय सद्गुण-रत्नाकराय सम्प्रति समर्पितोऽयं ग्रन्थोऽस्माभिरिति महत् सौभाग्यम् ।

ग्रन्थपरिचयः अत्र तावत् प्रतिपाद्यो विषयो व्याकरणम् । व्याकरणं हि प्रथमतः पठितुं प्रवृत्तानां तदुपयोगितातिशयमजानानां प्रायो नीरसमिवे मन्यमानानामरुचिकरविषयमिव प्रतिपद्यमानानां विद्यार्थिनां कथं नाम चेतसे रोचेत चित्तमाकर्षन्तं तदन्तरुपलभ्यमानं कमपि काव्यरसास्वादं विनेति मत्वा कारकसमासतद्धिततिङन्तकृदन्तेतिप्रकरणपञ्चकप्रतिपादितान्प्रसिद्धान् उप-युक्ततमांश्च कांश्चिद्विषयान् कौमुद्युक्तसूत्रार्थप्रतिपादनविधया यथोचितरचनाविशेष-कौशलेनानुष्टुप्छन्दोरूपेण सङ्ग्रथ्य सर्वत्रोदाहरणानि स्वनिर्मितान्येव प्रदर्शितानि ग्रन्थकारेण । श्रीमत्सज्जनसिंहभूपालवर्णनरूपाणां च तेषामुदाहरणानां सङ्घटन-मपि साधु सम्पादितम् । क्वचित्क्वचिद्विषये किञ्चिदुदाहरणं प्रदर्श्य विषयान्तरोदा-हरणनिरूपणं ग्रन्थविस्तरभयादुपेक्षितम् ।

अमुष्मिन् समये शरच्चन्द्रसुन्दरतरेण नश्वरेतरेण यशःशरीरेण विराजमानाः सन्तो विबुधवराः श्रीमन्तः कृष्णपन्तमहोदयाः किल विचारमन्दरेण बुद्धिसागरं प्रमथ्य ग्रन्थरत्नमिदममूल्यमुद्धाव्य लोके व्याकरणज्ञानदारिद्र्यं दूरीकृतवन्तः । एतच्च साधु परिशीलयतां विद्यानुरागवतामान्तरमहामोहान्धकारनिकरदूरीकारकोविदः स्फुरद्रूपतां प्राप्नुयात् प्रगाढो व्युत्पत्तिप्रकाशः । सर्वथा कल्पद्रुमायमाण एवायं सज्जनेन्द्रप्रयोगकल्पद्रुमो नूनं कृते विद्यार्थिनाम् ।

ग्रन्थेऽस्मिन् ग्रन्थनामानुरूपं ग्रन्थकारेण प्रकल्पितानि प्रकरणभेदप्रतिपादकानि पञ्च कुसुमानि । कारककुसुमं समासकुसुमं तद्धितकुसुमं तिङ्कुसुमं कृत्कुसुमं चेति यथाक्रमं तेषां नामानि । प्रत्येकस्मिन् प्रकरणे निबद्धानां नाम्नावगन्तव्यानापि विषयाणां व्यासतो दर्शितः परिचयो विषयसूच्याम् । अत्रापि समासतो निरूप्यते किञ्चित् । अत्र किल प्रथमे कारककुसुमे षण्णां कारकाणां विभक्तीनां च सप्तानां वर्णनमुपलभ्यते । समासकुसुमे सुबन्तानां सुबन्तेन समास एकः सामान्यो

विशेषश्च तत्पुरुषबहुव्रीहिद्वन्द्वाव्ययीभावभेदैश्चतुर्विध इति प्रथमतो भेदद्वये समासस्य कल्पिते पुनर्विभक्तानां नञश्च समास एकः सामान्यो विशेषश्च कर्मधारयद्विगुभेदाभ्यां द्विविध इति तत्पुरुषस्य भेदद्वयं दर्शितम् । तद्धितकुसुमे तत्तदर्थविशेषे प्रतिपाद्यमानास्तत्तदधिकारभेदप्रकल्पनविधया तद्धितप्रकरणान्तर्गताः प्रायः प्रत्ययाः सर्व एव सुस्पष्टं विशकलितरूपेण सविस्तरं प्रपञ्चिताः । वस्तुतोऽत्र घटते प्रकरणे 'प्रियतद्धिता दाक्षिणात्या' इत्युक्तिः श्रीमन्महाभाष्यकारस्य । तिङ्कुसुमे भ्वादिषु गणेषु प्रतिपादितानां प्रत्येकं प्रथमधातूनां रूपाणि केवलं वर्तमानकालिकानि प्रदर्श्य लकारार्थप्रयोगविचारो विस्तराद्विहितः । चरमे च कृत्कुसुमे तत्तेऽर्थकालभेदेन प्रसिद्धाः कृदन्तप्रत्ययाः प्रदर्शिताः । उणादिस्वरूपमपि किञ्चित्परिचायितम् । उपक्रमोपसंहारपद्यैश्च सम्पुटितान्येतानि पञ्च कुसुमानि । इत्थमयमल्पीयान् अपि व्याकरणविषयो ग्रन्थोऽयं काव्यरूपतां प्राप्तो नूनं चेतसे रोचमानो जनानां किं नाम नोपकुर्यात् ।

ग्रन्थकारपरिचयः साम्प्रतमिदमित्थमवसाय्य ग्रन्थतन्मुद्रणविषयकं वक्तव्यं ग्रन्थकर्तृविषये वक्ष्यमाणे वाचकानां ध्यानमाकृष्यते ।

एष हि प्रस्तुतग्रन्थनिर्माता पण्डितवरः श्रीमान् कृष्णपन्तशर्मा दाक्षिणात्यः काशीस्थमहाराष्ट्रब्राह्मणजातीयो मुद्गलसगोत्रीय आश्वलायनशाखाध्यायी सर्वथाऽलञ्चकार जन्मना विख्याततमं तद्व्यावद्ग्रन्थकारवरप्रादुर्भावसम्प्राप्तगौरवं विमलं धर्माधिकारीति कुलम् । धर्माधिकारिवंशो हि तत्कुलजेन श्रीवेणीरामपण्डितेन स्वसमयावधि वर्णितः पद्यप्रबन्धैः । तदुत्तरं च तद्वंशशेषवर्णनमस्मत्पितृचरणैर्निर्मितं वरीवर्ति । तदेतत् सकलमचिरादेव ग्रन्थमालायाः अमुष्या द्वितीये खण्डे प्रकाशितं नयनगोचरतामेष्यति । प्रकृतोपयोगो तत्कुलपरम्परापरिचयस्तु सङ्क्षिप्तो वितीर्यतेऽधुना । पुरासीत् पत्तनं बेदरं नाम विद्वल्ललामनिकेतनं भूतलभूषणायमानं दक्षिणस्यां दिशि । तत्रैकः समजनि विख्यातिमान् पण्डितो लक्ष्मीधरो नाम । अयमेव श्रीमान् धर्माधिकारिवंशवृक्षस्य बीजं मूलपुरुषः । एतेन विपश्चिता स्वविद्याबलाद् दिल्लीश्वराज्ञावशात् तत्र पुरे सभापतिना सता तन्नाममुद्राङ्कितं धर्माधिकारसम्पादनसूचकं राजशासनमयं ताम्रपट्टं प्राप्य बेदरवासिनो विप्रवरान् स्वधर्मस्थितौ स्थापयता धर्माधिकारीत्युपनाम लेभे निन्ये च तत्सार्थकतां तदुचितकार्यविधानैः । तत आरभ्याद्यावधि तत्कुलजाः सकलास्तेनैवोपपदेनालङ्कृताः सन्तो विजयन्ते ।

एतस्मिन् महीयसि दिव्यतमे धर्माधिकारिवंशे समुदपद्यत श्रीमान् नन्दपण्डितो नाम विनायकापरनामधेयः पदवाक्यप्रमाणपारावारपारीणो नानाविधग्रन्थनिर्माणप्रणयी । तस्य पुत्रद्वये द्वितीयोऽप्यद्वितीयो गुणैर्वेणीदत्तनामा धर्मशास्त्री ग्रन्थकर्ता सुषुवे गोपीनाथं नाम तनयम् । सोऽपि पण्डितो गोपीनाथः पुत्र-

प्रथमजीजनत्। तत्र किल द्वितीयः पुत्रो गुणैः प्रथमः स्मृतिवचनवाचस्पतिरग्निहोत्री नाम्ना ढुण्ढिराज इति प्रसिद्धिं लेभे । पण्डितप्रवरादेतस्मादपि लेभिरे पञ्च पुत्रा जन्म । तेषु द्वितीयस्तनूजो विद्वान् अनन्तनामधेय आसीत् । तस्य हि प्रपेदे पुत्रतां लक्ष्मीधरपण्डितः । श्रीमदनन्दपण्डितमहोदयादयं किल षष्ठः पुरुषोऽस्ति । अमुष्य लक्ष्मीधरविदुषोऽप्यासीत् पुत्राणां पञ्चकम् । तत्र द्वितीयस्तनयो विश्वनाथः सुधीर्जनयामास विद्वांसं वैद्यनाथं नाम । तनूजयोरस्मदीययोः प्रथमो विपश्चिदपश्चिमो धीमान् धीरवरः श्रीमान् कृष्णपण्डितो नाम सज्जनेन्द्रप्रयोगकल्पद्रुमग्रन्थ-निर्माता विद्योतते स्मैकोनविंशतितमायाः शताब्द्या अन्तिमे भागे ।

साहित्ये व्याकरणे च समं लीलायते स्म नृत्यन्ती यस्य जिह्वाग्रे सरस्वती, महामहिमशाली सोऽयं विचक्षणो धर्मशास्त्राटवीविहारकण्ठीरवः शब्दार्थराशौ विलक्षणतमां प्रौढां प्रतिभां प्राप्नोति स्म । 'न कोऽप्येतादृगासीत्प्रायो लोकभाषायां शब्दो यदीयं नाम न ज्ञातवानयं प्रज्ञावान् देवभाषायाम्' इति हि प्रसिद्धिरेत-द्विषयेऽद्यापि वृद्धजनवदनात्कर्णगोचरतामागच्छति । अत एव श्रीमत्पितृचरणै-र्धर्माधिकारिवंशशेषवर्णन एतद्वर्णनप्रसङ्गे 'शब्दार्थचये विलक्षणधीः' इत्युक्तम् । लौकिकेषु शास्त्रीयेषु च विषयान्तरेष्वपि वैदुष्यमस्यासीदद्वितीयं पण्डितप्रकाण्डस्य ।

अस्मज्ज्येष्ठभ्रातृवराणां द्वाचत्वारिंशदधिकैकोनविंशतिशततमे ( १९४२ ) वैक्रमेऽब्दे जन्मलाभं कृतवतां श्रीश्रीनाथशास्त्रिणां जन्मन एकस्माद्वर्षात्पूर्वमयं महात्मा समाप्तिं नीतवान् जन्मनो लीलाम् । तदानीं वयश्चास्य पञ्चाशद्वर्षदेशीय-मासीत् । कण्ठावरोधानुभवस्तु न कृतोऽनेन पुण्यात्मना श्रीकाशीविश्वेश्वरप्रसादा-दन्तिमं क्षणं यावदपि । इति ह्यैतिह्यमेतद्विषयकं श्रूयत एतज्ज्येष्ठसुतायाः पूज-नीयाऽस्मन्मातृभगिन्या वदनारविन्दात् । एतेन '१८९०' मिताद्वैक्रमादब्दात् '१८९२'मितमब्दं यावज्जन्मसमयोऽस्यावधार्यते । '१९४१' मिते वैक्रमे वर्षे किल खेलन्नासीत् कालः सद्गुणगणलोभनीयैतद्विलक्षणविचक्षणवरकवलीकारकामनये-त्यपि शक्यते वक्तुम् । उदयपुरनरेशितुः श्रीमत्फतहसिंहवर्ममहोदयस्य राज्य-सिंहासनाधिरोहणसमये '१९४१' मितं संवत्सरमासीद्वैक्रमम् । तेन श्रीमत्सज्जन-सिंहभूपतेरप्यन्तिमे समये तदेवासीद्वर्षमित्यतिरोहितम् । द्वे अपीमे विद्वद्राजरत्ने किञ्चित्कालमात्मानं प्रकाश्य परस्परवियोगसम्भावनाकातरे इव सहैव रत्नगर्भागर्भे विलीनतां प्रापतुः । सममेव रत्नद्वयमिदं कवलीकृतवतो बलीयान् खलु खलस्य कालस्य महिमा ।

पुत्रसन्तानसौभाग्यं तु नैवासीदस्यादृष्टविषये । कन्याद्वयसमुत्पत्त्या कन्या-वंशस्तावत् प्रचलितोऽस्य विदुषः । तत्र प्रथमा कन्या दुर्गानाम्नी वर्तते । इयं हि पूज्यतमा वृद्धतमास्माकं मातृष्वसा भूतलभूषणायमानधन्वन्तरिकल्पवैद्यराजेन्द्र-विद्वद्वरश्रीमत्त्र्यम्बकशास्त्रिमहोदयाग्रजभ्रातृजाया सती पतिसौभाग्यावसाद-

मन्तरं केनापि कारणेन ततः किञ्चित्कल्पितवृत्तिकाऽस्मद्गृहमागत्य वसन्ती चिरतिथात्समयतो महत्कष्टमनुभवन्ती साम्प्रतमध्यास्ते रोगशय्याम् । द्वितीया च गङ्गानाम्नी कन्या श्रीमत्पूजनीयचरणाऽस्माकमासीन्माता । एतया किल सौभाग्यसहितयैव परमं पदं प्रतस्थे । द्वितीयश्चायं कन्यावंशोऽस्य साम्प्रतं द्वितीयपुरुषपदं प्राप्तोऽस्मद्रूपेणावतिष्ठते । इत्थमियं धर्माधिकारिवंशवृक्षे सञ्जाता कन्यामयी द्वितीया शाखा वेतालवंशवृक्षेण सम्बन्धं प्राप्तवती प्रासूत शाखान्तरं तत्र । धर्माधिकारिवेतालकुलयोर्नद्योत्तमयोरिव सम्बन्धश्चायमस्मत्पूज्यवरश्रीमत्पितृचरणसमयेऽभूत् ।

पूर्वं सूचिताच्छ्रीमन्नन्दविदुषः षष्ठात्पुरुषादुत्पन्नो लक्ष्मीधरपण्डितो नाम यत्पुत्रपञ्चकं सुषुवे, तत्र चतुर्थस्य शम्भुनाम्नो विदुषः पञ्चमः पुरुषो व्याकरणमहारण्यसञ्चारपञ्चाननधर्मशास्त्रमर्मज्ञश्रीमन्नागेश्वरपण्डितवरतनूजन्मा श्रीलक्ष्मीधरपण्डितो नामास्मन्मिश्रं धर्मशास्त्रीयव्यवस्थाप्रदानरूपादिकं साधु सम्पादयन् पूर्वपरम्परानुगतं कार्यं विद्याविनयविवेकाद्यनेकसद्गुणगणसुषमासम्पन्नः सपुत्रः समं परिवारैर्विराजते काश्याम् । श्रीमत्काशीविश्वनाथप्रसादादधिकाशि विद्योतमानौ श्रीधर्माधिकारिवेतालवंशावमू समन्तादारोहतां परं समुन्नतेः पन्थानमित्यलं विस्तरेण ।

एतत्कृतेषु ग्रन्थेष्वयमन्तिमो ग्रन्थ इति 'संवद्ग्रहगुणनन्दाचला( १९३९ )-मिते' इत्येतद्ग्रन्थावसानपद्ये ग्रन्थनिर्माणसमयनिर्देशादनुमीयते । रत्नावलीसमाख्या कथा काशीखण्डीया गाढबन्धगद्यरूपेणैका द्वितीया च कालिकामन्दाक्रान्ताशतकनाम्नी स्तुतिः पद्यरूपेण जागरूकेति कृतिद्वयमेतदीयमस्या एव ग्रन्थमालाया द्वितीये खण्डे प्रकाशयिष्यते । वासिष्ठस्मृतिव्याख्याऽप्येतत्कृता श्रूयमाणा नाद्य यावदस्मत्करतलगताऽजायत ।

**उपसंहारः** एतावता परिसमाप्य ग्रन्थकारविषयकं वक्तव्यं पुनः पुनरुपसञ्जिहीर्ष्यमाणमिदमेतर्हि प्रास्ताविकं लेखनं केवलमादर्शपुस्तकपरिचयं धन्यवादप्रदानं चावश्यकं प्रस्तुत्योपसंह्रियते । ग्रन्थरत्नमिदमद्वितीयं मुद्रयितुं प्रवृत्तैरस्माभिर्यद्यत्कष्टजातमनुभूतं तत्र किल स्वात्मैव साक्षी । शुद्धस्य पुस्तकान्तरस्यानुपलब्धिर्लेखकमहाशयप्रसादसम्पाद्यमानाशुद्धिबहुलत्वं चादर्शपुस्तकस्येत्येवं हि वर्तेते तत्कारणद्वयम् । उदाहरणपद्यानां द्वितीयमेकं पुस्तकं सहृदयश्रीधर्माधिकारिलक्ष्मीधरपण्डितैः प्रदत्तं काममप्युपयोगितां व्यातेन इति तदिदमौदार्यं तेषां न कथं धन्यवादार्हम् । अत्र च दैवैर्महानुभावैर्यत्किमपि प्रदाय विचारसाहाय्यकमुपकारविशेषप्रदर्शनानुग्रहो विहितस्तेषां तथाविधोदारता कथङ्कारमेकेन मुखेन वर्णयितुं शक्या । ते किल महान्तो महानुभावाः परोपकारैकधियो विशेषतः स्नेहभाजनजनपक्षपातिनोऽकिञ्चनेन जनेनामुना दीयमानान् केवलं शुष्कानेव धन्यवादान् सस्नेहं

स्वीकृत्य प्रसीदन्तुतराम् । स्मृतिगोचरीकृतास्ते सङ्केतितमात्मानं जानीयुरेवेति तन्नामनिर्देशे मौनमालम्बितम् । केवलमेकं नाम तत्रोल्लेखनीयमवश्यं प्रतिभाति । पूजनीयचरणाः प्रगाढप्रतिभाविशेषभूषिताः प्रेक्षावन्तो नानाविधनिबन्धनिबन्धन-धुरन्धराः प्रायः सकलशास्त्रमर्मज्ञा वाचस्पतिकल्पा अर्ज्यालोपनामकाः श्रीमन्त उमानाथशर्ममहोदया वृद्धतमाः कासरोगेण भृशं पीड्यमाना अपि शास्त्रीयविषय-विचारानपहाय नान्यत्कार्यमाचरन्तो विलसन्ति वाराणस्याम् । एषां किल महानु-भावानां कृपया प्रकृतग्रन्थे व्याकरणविषयकाः सन्देहविशेषाः केचित्पलायाञ्चक्रिर इति तदुपकारस्मरणमात्रेण पूर्णतां नीयते स्वकर्तव्यम् ।

अन्ते चैतत्पुस्तकप्रकाशकं श्रेष्ठिवरश्रीजयकृष्णदासमहोदयमाशीर्वादैरभि-नन्द्य, चिरादनुसृतं प्रकृतग्रन्थमुद्रणकार्यं पूज्यवरश्रीमद्गुरुवरचरणानां करुणया श्रीमद्-विश्वेश्वरस्यानुग्रहेण च कथमपि नीत्वा समाप्तेः सरणिं, सीसकाक्षरयोजकादीनामनव-धानेन संशोधने दृष्टिदोषेण च सम्भाविता अशुद्धीः संशोध्य ग्रन्थेऽस्मिन् विद्वांसो नयनार्पणप्रयासमवश्यमङ्गीकरिष्यन्तीति दृढं सम्भाव्य सम्प्रति प्रास्ताविका-दमुष्माद्विरम्यते लेखादिति शम् ।

गङ्गादशहरा, सं० १९९०, काशी ।

विदुषां विधेयः
अनन्तरामशास्त्री वेतालः ।

सर्वविधपुस्तकप्राप्तिस्थानम्—
जयकृष्णदास हरिदास गुप्तः—
चौखम्बा संस्कृत सीरिज़ आफिस,
बनारस सिटी ।

* श्रीः *

# सज्जनेन्द्रप्रयोगकल्पद्रुमकारिकाः ।

## कारककुसुमम् ।

अथ प्रयोगं जिज्ञासुर्जानीयात् कारकं पुरा ।
संज्ञाभिः षड्विधं प्रोक्तं ता उच्यन्ते पृथक् पृथक् ॥ १ ॥
कर्ता स्वतन्त्र इत्युक्तः स चतुर्विध ईरितः ।
उक्तोऽनुक्तस्तथा हेतुः कर्मकर्ता चतुर्थकः ॥ २ ॥
तत्र कर्तर्यभिहिते प्रथमैव विधीयते ।
तृतीया चाथवा षष्ठी स्मृताऽनभिहिते तथा ॥ ३ ॥
क्रियाफलाश्रयं कर्म तच्चतुर्विधमीरितम् ।
उक्तानुक्ते कर्तृकर्माकथितं चेति, ते पुनः ॥ ४ ॥
उक्तानुक्ते द्विधा प्रोक्ते ईप्सितानीप्सिते इति ।
प्रथमाऽभिहिते कर्मण्यनुक्ते तु द्वितीयिका ॥ ५ ॥
तृतीया च चतुर्थी च षष्ठी चैव भवन्ति हि ।
योगेऽकर्मकधातूनां देशकालक्रियाऽयनम् ॥ ६ ॥
क्रियोपकारकं यत्तत् करणं त्वेकमेव हि ।
तृतीया पञ्चमी चैव षष्ठी च करणे भवेत् ॥ ७ ॥
क्रियया यमभिप्रैति सम्प्रदानं स उच्यते ।
चतुर्थी च तृतीया च भवतः सम्प्रदानके ॥ ८ ॥
रुच्यर्थानां प्रीयमाणः, श्लाघह्नुङ्स्थाशपां तु वै ।
ज्ञीप्समानो, धारयतेरुत्तमर्णस्तथेप्सितः ॥ ९ ॥
स्पृहे, राधीक्ष्योर्यस्य विप्रश्नः सम्प्रदानकम् ।
क्रुधद्रुहेर्ष्याऽसूयार्थयोगे यं प्रति कोपनम् ॥ १० ॥
विश्लेषेऽवधिभूतं यत् तदपादानमीरितम् ।
पञ्चम्येव त्वपादाने वर्ततेऽन्यथा ॥ ११ ॥
जुगुप्सार्थविरामार्थप्रमादार्थक्रियायुजि ।
भयत्राणार्थधातूनां भयहेतावपीरितम् ॥ १२ ॥
परापूर्वस्य जयतेरसह्येऽर्थेऽपि तद्भवेत् ।
ईप्सिते वारणार्थानामपादानत्वमिष्यते ॥ १३ ॥
मां न पश्येदयमिति व्यवधाने यमिच्छति ।
तदपादानसंज्ञं स्यादाख्याता चोपयोगके ॥ १४ ॥
जायमानस्य हेतुश्च भूकर्तुः प्रभवस्तथा ।
आधारश्चाधिकरणं तच्च त्रेधा प्रकीर्तितम् ॥ १५ ॥
अभिव्यापकमौपश्लेषिकं वैषयिकं तथा ।
सप्तम्येवाधिकरणे सामान्यमिति कीर्तितम् ॥ १६ ॥
योगे धातुविशेषाणां कारके कारकान्तरम् ।

तथैवार्थविशेषेण जायन्ते हि विभक्तयः ॥ १७ ॥
कर्तुश्च सम्प्रदानत्वं करणत्वं च कर्मणः।
कर्मत्वं करणस्यापि सम्प्रदानत्वमित्यपि ॥ १८ ॥
सम्प्रदानस्य कर्मत्वमपादाने न किञ्चन ।
आधारे कर्मता चैवमित्येतत् कारकान्तरम् ॥ १९ ॥
अभावेऽर्थविशेषस्योत्सर्गतः प्रथमा भवेत् ।
एवमेवैकवचनं क्रियास्तिभवतीति च ॥ २० ॥
सा प्रातिपदिकार्थेऽपि संख्यामात्रे तथैव च।
लिङ्गमात्रे मानमात्रे तथा सम्बोधनेऽपि च ॥ २१ ॥
उपर्युपर्यध्यधि चाधोऽधो धिक् परितोऽभितः ।
समयोभयतो हा च निकषा सर्वतः प्रति ॥ २२ ॥
अन्तरेणान्तरा चैषां योगे स्यात्तु द्वितीयिका ।
लक्षणार्थतृतीयार्थहीनार्थद्योतकस्त्वनुः ॥ २३ ॥
उपो हीनाऽधिकार्थश्च, प्रतिपर्यनवस्त्वथ ।
भागवीप्सातत्त्वकथालक्षणार्था, अभिस्तथा ॥ २४ ॥
भागवर्जं तदर्थश्च, पूजातिक्रमणेऽप्यतिः ।
अनर्थकावधिपरा पूजार्थद्योतकश्च सुः ॥ २५ ॥
गर्हासम्भावनाकामचारानुज्ञासमुच्चये ।
अपिरेते च संप्रोक्ताः कर्मप्रवचनीयकाः ॥ २६ ॥
एषां योगे द्वितीया स्यात् कालमार्गार्थयोरपि ।
आत्यन्तिके च संयोगे द्वितीया परिकीर्तिता ॥ २७ ॥
द्योत्यायां तु फलप्राप्तौ कालमार्गार्थयोः खलु ।
आत्यन्तिके च संयोगे तृतीया भवति स्फुटम् ॥ २८ ॥
विकृताङ्गेन येनैव लक्ष्यतेऽङ्गी विकारवान् ।
ततस्तृतीया भवति सहार्थेन तथा युजि ॥ २९ ॥
कञ्चित्प्रकारं प्राप्तस्य लक्षणे च तृतीयिका ।
हेत्वर्थे च तथैव स्यात् प्रकृत्यादिभ्य एव च ॥ ३० ॥
तादर्थ्ये च चतुर्थी स्यात् क्लृपि सम्पद्यमानके ।
उत्पातेन ज्ञापिते च हितयोगेऽपि सा भवेत् ॥ ३१ ॥
क्रियार्थोपपदस्यैवमप्रयुक्तस्य कर्मणि ।
क्रियार्थायां क्रियायां ये प्रत्ययाश्च तदन्ततः ॥ ३२ ॥
नमःस्वस्तिस्वधास्वाहाऽलंवषड्योगतो भवेत् ।
मनधातोः प्राणिवर्जकर्मण्यपि तिरस्कृतौ ॥ ३३ ॥
ल्यब्लोपे चाधिकरणे कर्मण्यपि च पञ्चमी ।
यतः कालाध्वनिर्माणं पञ्चमी तत्र, तद्युजि ॥ ३४ ॥
काले तु सप्तमी मार्गे प्रथमा सप्तमी तथा ।
आराद्दतेऽन्यदिक्शब्दैरञ्चूत्तरपदैर्युजि ॥ ३५ ॥
आजाहियुक्ते च तथा बहिःप्रभृतियोगतः ।
वर्जनेऽपपरी चैव मर्यादावचने तथाऽऽङ् ॥ ३६ ॥

कर्मप्रवचनीयाख्यस्तद्योगे पञ्चमी भवेत् ।
प्रतिदाने प्रतिनिधौ प्रतिस्तत्संज्ञको भवेत् ॥ ३७ ॥
गुणोऽकर्तर्यृणे हेतौ पृथङ्नानाविनायुजि ।
तथा दूरान्तिकार्थेभ्यः पञ्चमी प्रविधीयते ॥ ३८ ॥
षष्ठी स्वस्वामिभावादिसम्बन्धे खलु जायते ।
तथा हेतुप्रयोगे च हेतौ द्योत्ये च वा भवेत् ॥ ३९ ॥
हेतोश्च सर्वनाम्नश्च प्रयोगेऽपि भवेदियम् ।
अतसर्थप्रत्ययेन युजि स्यादेनबन्ततः ॥ ४० ॥
अधीगर्थदयेशां च योगे दूरान्तिकार्थयोः ।
गुणाधाने कृञः कर्मण्यपि षष्ठी विधीयते ॥ ४१ ॥
रोगकर्तृकपीडाया अज्वरायाश्च कर्मणि ।
नाथधातोराशिषि च कर्मण्यपि तथा भवेत् ॥ ४२ ॥
हिंसायां निप्रहणननाटक्राथपिषां तथा ।
जासेश्च कर्मण्यपि हि समर्थव्यवहृत्पणोः ॥ ४३ ॥
तथा तदर्थस्य दिवः सोपसर्गस्य वा भवेत् ।
देवतासम्प्रदानार्थधातोः प्रेष्यब्रुवोरपि ॥ ४४ ॥
कृत्वोऽर्थानां प्रयोगे च कालाधिकरणे भवेत् ।
कृद्योगे कर्तरि तथा कर्मणि प्रागुदाहृता ॥ ४५ ॥
कर्तृकर्मोभयप्राप्तौ कर्मण्येव विधीयते ।
लोकाव्ययानां निष्ठायाः खलर्थानां तृनोऽपि च ॥ ४६ ॥
प्रयोगे नैव षष्ठी स्यादुके कामुकतो भवेत् ।
द्विषेः शतुर्वा भवति शेषे सर्वेभ्य एव च ॥ ४७ ॥
वर्तमानार्थक्तस्य तथाऽऽधारार्थकस्य च ।
योगे षष्ठी भवत्येव तथा तुल्यार्थकैः सह ॥ ४८ ॥
आयुष्यकुशलैश्चैव हितभद्रसुखार्थकैः ।
योगे षष्ठी भवेदाशीर्वादवाक्ये विकल्पतः ॥ ४९ ॥
साध्वसाधुप्रयोगे चेन्विषयक्तस्य कर्मणि ।
निमित्तात् कर्मयोगे च सप्तमी प्रविधीयते ॥ ५० ॥
क्रियान्तरं यत्क्रियया लक्ष्यते तत्र सप्तमी ।
स्वामीश्वराधिपतिभिस्तथा दायादसाक्षिभिः ॥ ५१ ॥
प्रसूतप्रतिभूभिश्च योगे भवति सप्तमी ।
आयुक्तकुशलाभ्यां चाऽऽसेवायां सप्तमी भवेत् ॥ ५२ ॥
जातिक्रियागुणैर्नाम्ना समुदायात्पृथक्कृतिः ।
यतस्ततः सप्तमी स्यात् षष्ठी चापि भवेदिति ॥ ५३ ॥
अर्चायां साधुनिपुणाभ्यां योगे सप्तमी भवेत् ।
प्रसितोत्सुकशब्दाभ्यां लुप्तप्रत्ययभादपि ॥ ५४ ॥
शक्तिद्वयस्य मध्ये यौ कालमार्गौ ततस्तु सा ।
ऐश्वर्येऽधौ कृञि तु वा कर्मप्रवचनीयता ॥ ५५ ॥
यतोऽधिक उपे चैव योगे चैवाधिकेन च ।

सप्तमी तु प्रवक्तव्या कारकस्यैष सङ्ग्रहः ॥ ५६ ॥

## समासकुसुमम् ।

समासो द्विविधः प्रोक्तः सामान्यश्च विशेषकः ।
सामान्यः केवलं ज्ञेयः सुबन्तेन सुबन्ततः ॥ ५७ ॥
विशेषस्तु चतुर्धा स्यादेकस्तत्पुरुषः स्मृतः ।
द्वितीयश्च बहुव्रीहिर्द्वन्द्वश्चापि तृतीयकः ॥ ५८ ॥
चतुर्थश्चाव्ययीभाव इति भेदचतुष्टयम् ।
द्विधा तत्पुरुषो बोध्यः सामान्योऽथ विशेषकः ॥ ५९ ॥
सामान्यस्त्वष्टधा प्रोक्तो विभक्तीनां, तथा नञः ।
विशेषो द्विविधः, कर्मधारयोऽथ द्विगुस्तथा ॥ ६० ॥
यः समानाधिकरणः स प्रोक्तः कर्मधारयः ।
संख्यावाचकपूर्वो यः स द्विगुः परिकीर्तितः ॥ ६१ ॥
प्रथमस्त्वष्टधा प्रोक्तो विशेषणपुरःपदः ।
विशेषणोत्तरपदो विशेषणपदद्वयः ॥ ६२ ॥
उपमानाद्यपदक उपमानोत्तरस्तथा ।
वधारणापूर्वपदः कुगतिप्रादिकस्तथा ॥ ६३ ॥
तथोपपदसंज्ञश्च कर्मधारय ईरितः ।
बहुव्रीहिर्द्विधा प्रोक्तः सामान्योऽथ विशेषकः ॥ ६४ ॥
सामान्यः षट्प्रकारः स्याद् द्वितीयादिविभक्तिभिः ।
विशेषः पञ्चधा प्रोक्तः संख्योत्तरपदस्तथा ॥ ६५ ॥
संख्योभयपदश्चैव व्यतिहारस्वरूपकः ।
दिगन्तरालरूपश्च सहपूर्वपदोऽपि च ॥ ६६ ॥
द्वन्द्वस्त्रिधा समाख्यात इतरेतरयोगकः ।
द्वितीयस्तु समाहार एकशेषस्तृतीयकः ॥ ६७ ॥
द्विविधश्चाव्ययीभावः सामान्यश्च विशेषकः ।
सामान्यस्तु समर्थेन समासादव्ययस्य च ॥ ६८ ॥
विशेषस्तु विभक्त्यर्थे समीपार्थे समृद्धिके ।
व्यृद्ध्यर्थे चाप्यभावार्थे चात्ययार्थे च साम्प्रते ॥ ६९ ॥
प्रादुर्भावे च शब्दस्य, पश्चादर्थे यथार्थके ।
आनुपूर्व्ये यौगपद्ये सादृश्यार्थे तथैव च ॥ ७० ॥
सम्पत्त्यर्थे च साकल्येऽन्तार्थे चाव्ययमात्रकम् ।
यथाऽव्ययमसादृश्ये, यावच्चैवावधारणे ॥ ७१ ॥
मात्रार्थे प्रतिना सुप्, चाऽक्षसंख्ये परिणा तथा ।
शलाका, चाथ पञ्चम्याऽपपरी बहिरञ्चु च ॥ ७२ ॥
आङ् मर्यादाऽभिविध्योश्चाभिप्रती लक्षणेन च ।
आभिमुख्ये, लक्षणेन त्वनुर्यत्समया तथा ॥ ७३ ॥
यस्यायामेऽपि तच्चैव, तिष्ठद्गुप्रभृतीनि च ।
पारे मध्ये च षष्ठ्या वा, संख्या वंश्येन चैव हि ॥ ७४ ॥

नदीभिश्च तथा संख्याऽन्यपदार्थे सुबन्तकम् ।
एषां समासतो ज्ञेयोऽव्ययीभावो विशेषकः ॥ ७५ ॥
एषु केचित्समासास्तु विभक्तीनामलोपनात् ।
अलुक्समासाः संप्रोक्ताः सत्युत्तरपदे परे ॥ ७६ ॥
तृतीया नाम्नि मनस, आज्ञायिनि परे तथा ।
ओजःसहोऽम्भस्तमस, आत्मनः पूरणे परे ॥ ७७ ॥
परात्मभ्यां चतुर्थी तु पदशब्दे परे सति ।
स्तोकादिभ्यः पञ्चमी च षष्ठी चाक्रोशके तथा ॥ ७८ ॥
देवात्प्रिये मूर्खबोध्ये, वाग्दिक्पश्यद्भ्य एव च ।
युक्तिदण्डहरेष्वेव, तथा दासे दिवोऽपि च ॥ ७९ ॥
लाङ्गूलपुच्छशेपेषु शुनः, पुत्रे तु कुत्सने ।
योनिविद्यायुजि ऋतः, स्वसृपत्योस्तथैव वा ॥ ८० ॥
सप्तमी हलदन्ताच्च, मध्यान्ताभ्यां गुरावपि ।
अमूर्धमस्तकात्स्वाङ्गादकामे, शुद्धदस्तथा ॥ ८१ ॥
बन्धे वा हलदन्ताच्च, कृति तत्पुरुषे तथा ।
प्रावृट्शरत्कालदिवां वर्षक्षरशराद्वरात् ॥ ८२ ॥
जे, घकालतनेष्वेव कालनाम्नोऽप्यकालतः ।
शये वासे वासिनि वै, योनियन्मतुषु त्वपः ॥ ८३ ॥
इन्सिद्धबध्नातिषु च, भाषायां स्थे च सप्तमी ।
लुप्यते, त इति प्रोक्ता बोध्याश्चोदाहृतिं विना ॥ ८४ ॥

## तद्धितकुसुमम् ।

तस्मै प्रयोगाय हिताः प्रत्ययास्तद्धिताभिधाः ।
बह्वर्थानां प्रभेदेन भवन्त्येकोनविंशतिः ॥ ८५ ॥
एषु केचित्प्रगृह्यन्ते बालानामुपयोगिनः ।
अण् प्रायः सकलार्थेषु भवेत्सामान्यतः किल ॥ ८६ ॥
अपत्यार्थेऽत इञ् स्त्रीभ्यो ढक् चैवाऽत्रेः कलेरपि ।
पत्युत्तरपदाण्ण्यो, गोर्यदजादिप्रसङ्गके ॥ ८७ ॥
उत्सादिभ्योऽञ् तथा स्त्रीपुंसाभ्यां नञ् च स्नञेव च ।
कुञ्जादिभ्यो नडादिभ्यश्चफञ्फकौ भवतस्तथा ॥ ८८ ॥
बिदादिभ्योऽञ् तथा गर्गादिभ्यो यञ् च भवत्यपि ।
अश्वादिभ्यश्च फञ् प्रोक्तः शुभ्रादिभ्यो ढगित्यपि ॥ ८९ ॥
क्षुद्राभ्यो वा चतुष्पाद्भ्यो ढ्रक्ढञौ भवतोऽपि च ।
रेवत्यादेश्च कुर्वादेष्ठक् च ण्यश्च भवत्यपि ॥ ९० ॥
अन्येऽपि प्रत्यया बोध्याः प्रातिस्विकतयोदिताः ।
रक्ताद्यर्थेषु ठक्छौ ढक् ख्यड्यौ, प्रातिस्विका अपि ॥ ९१ ॥
तथा परिवृताद्यर्थे इन्यञ्ठक्ढञ ईरिताः ।
देवतार्थे छ घन् ट्यण् ढक् ठञ् ण्यच्च डुलजादयः ॥ ९२ ॥
सामूहिके च यञ्यतल्अञ्ठक्यञ्छवुञस्तथा ।

क्रीडाद्यथ णञौ ठक् च वुञिनिश्च भवन्ति हि ॥ ९३ ॥
देशे तदस्मिन्नस्तीति तेन निर्वृत्तमित्यपि ।
तन्निवासोऽदूरभव इत्येते चातुरर्थिकाः ॥ ९४ ॥
एषु चोरञ्, बह्वजङ्गान्मतुपः, सङ्कलादितोऽञ् ।
अरोहणादेर्वुञ् प्रोक्तः कृशाश्वादेश्च छण् मतः ॥ ९५ ॥
कुमुदादेष्ठजित्युक्तः काशादिभ्य इलस्तथा ।
तृणादिभ्यश्च सः प्रोक्तः प्रेक्षादिभ्य इनिः स्मृतः ॥ ९६ ॥
अश्मादे रश्च, सख्यादेर्ढञ्, ण्यः सङ्काशमुख्यतः ।
बलादेर्यश्च, पक्षादेः फक्, कर्णादेश्च फिञ् भवेत् ॥ ९७ ॥
सुतङ्गमादिभ्य इञ् च प्रगद्यादेर्ञ्य इत्यपि ।
वराहादेश्च कक् प्रोक्तः कुमुदादेश्च ठक् भवेत् ॥ ९८ ॥
मध्वादिभ्यो मतुप् चैवोत्करादिभ्यश्छ ईरितः ।
अन्येऽपि प्रत्यया ज्ञेयाः प्रातिस्विकतयोदिताः ॥ ९९ ॥
तत्र जातश्च, तत्सोढमस्य, तत्र भवस्तथा ।
तदागतः, प्रभवति, निवासः सोऽस्य इत्यपि ॥ १०० ॥
अधिकृत्य कृतो ग्रन्थः, सोऽस्य भक्तिस्तथैव च ।
तेन प्रोक्तमुपज्ञातं तथा तस्येदमित्यपि ॥ १०१ ॥
एते च शैषिकाः प्रोक्ता, एषु कत्र्यादितो ढकञ् ।
नद्यादिभ्यश्च ढक् प्रोक्तो वृद्धाच्छः परिकीर्तितः ॥ १०२ ॥
काश्यादिभ्यष्ठञ्ञिठौ चोकारान्ताच्चैव ठञ् मतः ।
धूमादिभ्यश्च वुञ् चोक्तः कालाट्ठञ् परिकीर्तितः ॥ १०३ ॥
ञ्यः स्यात्परिमुखादिभ्यस्तथाऽध्यात्मादितश्च ठञ् ।
योनिविद्यायुजो वुञ् च, ऋदन्ताट्ठञ् प्रकीर्तितः ॥ १०४ ॥
शिशुक्रन्दादितश्छश्च, ञ्यो भवेच्छण्डिकादितः ।
सिन्धुतक्षशिलादिभ्यश्चाऽणञौ परिकीर्तितौ ॥ १०५ ॥
वुञ् चैव हि कुलालादेः, छश्च रैवतिकादितः ।
प्रातिस्विकतया प्रोक्ता अन्येऽपि प्रत्यया मताः ॥ १०६ ॥
वैकारिकेषु त्वोरञ् स्यात् पलाशादिभ्य एव च ।
प्राणिभ्यो रजतादेश्च, मयड् वृद्धाशरादितः ॥ १०७ ॥
अन्येऽप्येवंविधा बोध्याः प्रातिस्विकतयोदिताः ।
तेन दीव्यत्यथ जितं खनत्यपि जयत्यपि ॥ १०८ ॥
संस्कृतं, तरतीत्येवं, चरत्यपि, हरत्यपि ।
उपसिक्तं च, संसृष्टं, तथोञ्छति च, रक्षति ॥ १०९ ॥
अवक्रयः, तस्य धर्म्यं, पण्यं, शिल्पं तथैव च ।
तथा प्रहरणं, शीलं, वृत्ता चाध्ययने क्रिया ॥ ११० ॥
हितं भक्षाश्च, नियतं तदस्मै दीयतेऽपि च ।
एते ठकोऽवधीयाश्च, ठक् सामान्यत एषु हि ॥ १११ ॥
पर्पादितः ष्ठन् विहितो भस्त्रादिभ्यस्तथैव च ।

ऋकारान्तादञित्युक्तः केचित्प्रातिस्विका अपि ॥ ११२ ॥
तत्र साधुस्तथान्ये च प्राग्घितीया इतीरिताः ।
यत् सामान्यः, प्रतिजनादितः खञ्, ठक् कथादितः ॥ ११३ ॥
गुडादिभ्यश्च ठञ् प्रोक्तोऽन्ये तु प्रातिस्विका अपि ।
तस्मै हितं, तदर्थं च विकृतेः प्रकृतौ तथा ॥ ११४ ॥
स्यात्तदस्य तदस्मिंश्च प्राक्क्रीतीया उदाहृताः ।
एषु सामान्यतश्छः स्याद्, यद् भवेदुगवादितः ॥ ११५ ॥
शरीरावयवाच्चैवान्ये च प्रातिस्विका अपि ।
तेन क्रीतं, तन्निमित्तं संयोगोत्पातकौ तथा ॥ ११६ ॥
तस्येश्वरस्तस्य वापो, विदितस्तत्र चैव हि ।
वृद्ध्यायलाभशुल्कोपदास्तदस्मिंश्च दीयते ॥ ११७ ॥
तद्धरत्यावहति च वहत्यवहरत्यपि ।
पचत्यथो सम्भवति तदस्य परिमाणकम् ॥ ११८ ॥
तदर्हति, तथा तेन निर्वृत्तं, तमधीष्टकः ।
भृतो भूतस्तथा भावी, तदस्य ब्रह्मचर्यकम् ॥ ११९ ॥
परिजय्यं लभ्यकार्यसुकरं तेन चैव हि ।
कार्यं च दीयते तत्र, सम्पादिनि तथैव च ॥ १२० ॥
प्रयोजनं, तदन्येऽपि प्रोक्ताः प्राग्वतयस्त्विमे ।
एषु सामान्यतष्ठञ् च, निष्कादिभ्यष्ठगित्यपि ॥ १२१ ॥
दण्डादिभ्यश्च यत् प्रोक्तः शेषाः प्रातिस्विकास्तथा ।
तेन तुल्यं क्रिया चेच्च, तत्र तस्येव चेत्यपि ॥ १२२ ॥
तदर्हं चेति गदितास्त्र्यार्थिका, एषु वै वतिः ।
तस्य भावस्तस्य कर्म, भावकर्मार्थिका इमे ॥ १२३ ॥
एषु तु त्वतलौ, पृथ्वादिभ्यः स्यादिमनिच् खलु ।
ष्यञ् च वर्णदृढादिभ्यो गुणार्थाद् ब्राह्मणादितः ॥ १२४ ॥
कर्मण्यपि च, पत्यन्ताद् यक् पुरोहितमुख्यतः ।
योपधाच्च गुरूपान्त्याद् वुञ् द्वन्द्वाच्च प्रकीर्तितः ॥ १२५ ॥
तथा मनोज्ञादिभ्यश्च शेषाः प्रातिस्विका अपि ।
धान्यानां भवनं चैव, तेन वित्तस्तथैव च ॥ १२६ ॥
प्रमाणं, परिमाणं च, स एषां ग्रामणीस्तथा ।
एते पाञ्चमिकाः प्रोक्ता, एषु खञ् ढक् छ यत् तथा ॥ १२७ ॥
मूले कर्णादितो जाहच् पाके पील्वादितः कुणप् ।
तदस्य सञ्जातमिति तारकादेरितच् तथा ॥ १२८ ॥
प्रमाणे द्वयसज्दघ्नञ्मात्रचः परिकीर्तिताः ।
परिमाणे वतुप् चैव, संख्यायास्तयबङ्कके ॥ १२९ ॥
मयड् गुणविमाने च, गोषदादेश्च वुन् भवेत् ।
आकर्षादेश्च कन् प्रोक्त इष्टादिभ्य इनिस्तथा ॥ १३० ॥
एतेषु चान्ये बहवः शेषाः प्रातिस्विका अपि ।
तदस्यास्त्यस्मिन्निति च मत्वर्थीयाः प्रकीर्तिताः ॥ १३१ ॥

रसादिभ्यो मतुप् प्रोक्तः सिध्मादेर्लच् प्रकीर्तितः ।
लोमादिभ्यश्च पामादेः पिच्छादिभ्यः शनेलचः ॥ १३२ ॥
अकारान्तादिनिठनौ व्रीह्यादिभ्यस्तथैव च ।
तुन्दादिभ्य इलच् चैवाऽर्शआदिभ्योऽच् प्रकीर्तितः ॥ १३३ ॥
सुखादिभ्य इनिश्चैव पुष्करादिभ्य एव च ।
बलादिभ्यो मतुप् चैव शेषाः प्रातिस्विका अपि ॥ १३४ ॥
विभक्तिस्वार्थकालार्थाः प्रत्ययाः प्राग्दिशीयकाः ।
एषु पञ्चम्यास्तसिल् च सप्तम्यास्तु त्रलित्यपि ॥ १३५ ॥
किंसर्वनामबहुतोऽधुनादानींह्यदाहिलः ।
इदं किमेतत्तद्भ्यश्च था थमुः क्नन् च कीर्तिताः ॥ १३६ ॥
भूतपूर्वेऽतिशयिके विभक्तव्ये प्रशंसने ।
आसमाप्तौ कुत्सिते चाऽज्ञाते चैवानुकम्पिते ॥ १३७ ॥
अल्पे ह्रस्वे गर्वितेऽर्थे प्रागिवीया इमे मताः ।
एषु दिग्देशकालेभ्योऽस्तात्यस्यात्येनपो मताः ॥ १३८ ॥
आजाहि च तथा ज्ञेयो विधार्थे धा धमुञ् मतः ।
चरड् रूप्य तमप् चेष्ठन् तरबीयसुनौ तथा ॥ १३९ ॥
रूपप् कल्पप् देश्य देशीयर् जातीयर् बहुच् मतः ।
अव्ययेभ्यः सर्वनाम्नोऽप्यकच्, कश्च तथैव हि ॥ १४० ॥
जातिनाम्नो मनुष्यात् कन्, केचित् प्रातिस्विका अपि ।
इवार्थश्च समूहार्थो वीप्सार्थोऽनितरार्थकः ॥ १४१ ॥
अभूततद्भावकश्च व्यापनः प्रातिलोम्यकः ।
एते चान्य इवाद्यर्थकीया, एषु च कन् मतः ॥ १४२ ॥
शाखादिभ्यश्च यः प्रोक्तः, छः समासादिवार्थकात् ।
अण् चैव शर्करादिभ्योऽङ्गुल्यादिभ्यष्ठगित्यपि ॥ १४३ ॥
त्रिगर्तषष्ठाद्दामन्यादेश्छः सङ्घार्थ ईरितः ।
स्थूलादिभ्यः प्रकारे कन्, प्राचुर्यप्रस्तुते मयट् ॥ १४४ ॥
देवतान्ताच्च यत् प्रोक्तो विनयादेश्च ठक् स्मृतः ।
आद्यादिभ्यस्तसिश्चैव, च्विस्तु कृभ्वस्तियोगतः ॥ १४५ ॥
सातिश्चा डाच् तथान्येऽपि प्रातिस्विकतयोदिताः ।
इति सङ्क्षेपतः प्रोक्त एष तद्धितसङ्ग्रहः ॥ १४६ ॥

## तिङ्कुसुमम् ।

लादेशास्तु तिङः प्रोक्ता लकारास्तु नवैव हि ।
लट्लिट्लुट्लृट्लोट्च लङ्लिङ्लुङ्लृङ्चेति प्रकीर्तिताः ॥ १४७ ॥
अष्टादश तिङस्तिप्तस्झिसिप्थस्थमिपस्तथा ।
वस्मस्ताऽऽतांझथासाथांध्वमिड्वहिमहिङ्ङिति ॥ १४८ ॥
परस्मैपदसंज्ञास्तु पूर्वा एषु नवेरिताः ।
उत्तरास्तु नव प्रोक्ता आत्मनेपदसंज्ञकाः ॥ १४९ ॥
धातुभ्यश्च लकाराः स्युर्धातवस्ते द्विधेरिताः ।

सकर्मकास्तथा कर्मरहिता इति भेदतः ॥ १५० ॥
सकर्मकेभ्यः कर्मार्थे कर्त्रर्थे च भवन्ति ते ।
अकर्मकेभ्यो भावार्थे कर्त्रर्थेऽपि भवन्ति ते ॥ १५१ ॥
ते पुनर्द्विविधा ज्ञेया धातवः कण्ड्वादिभिः ।
शुद्धाश्चैव सनाद्यन्ताः शुद्धानां च गणा दश ॥ १५२ ॥
भ्वाद्योऽदादिर्जुहोत्यादिर्दिवाद्यः स्वाद्यस्तथा तुदादिकः ।
रुधादिश्च तनादिश्च क्र्यादिश्चैव चुरादयः ॥ १५३ ॥
दशभ्यो गणधातुभ्यो दशैव विभागादृशः ।
लट्लोट्लङ्विधिलिङ्श्चैव नान्येषु प्रसजन्ति हि ॥ १५४ ॥
शब्लुक्श्लुश्यन्श्नुशः श्नम् च उः श्ना णिजिति कर्तरि ।
यगेव भावकर्मार्थे स्यादन्येषु शप् स्मृतः ॥ १५५ ॥
लुटि तासिस्स्यलृटोः स्यः शप्स्थाने च्लिर्लुङि स्मृतः ।
त्रयस्ते पुरुषा ज्ञेया ये त्रिकास्तिङां त्रयः ॥ १५६ ॥
प्रथमो मध्यमश्चैवोत्तमश्चेति तु नामतः ।
मध्यमश्चोत्तमश्चैव कर्त्रर्थे युष्मदस्मदि ॥ १५७ ॥
कर्त्रर्थे इतरस्मिंस्तु प्रथमः परिकीर्तितः ।
एकद्विबहुसंज्ञानि वचनानि त्रिके त्रिके ॥ १५८ ॥
प्रत्येकं प्रभवन्तीत्थं वर्तमाने च लट् स्मृतः ।
भूते लिट्लङ्लुङश्चैव लृट्लुटौ लृङ् भविष्यति ॥ १५९ ॥
प्रवर्तनाशिषोर्लिङ्लोटौ, एष सामान्यसङ्ग्रहः ।
गुप्तिज्किद्भ्यो मान्बधदान्शान्भ्यां स्वार्थे सनिष्यते ॥ १६० ॥
आशंसायां तथेच्छैककर्तृकादिषिकर्मणः ।
धातोरिच्छार्थके च स्यात् क्यच् काम्यच्च पुनः स्मृतौ ॥ १६१ ॥
मान्तनाम्नोऽव्ययात् क्यच् न काम्यच् भवति निश्चयात् ।
कर्माधिकरणाभ्यां क्यजाचारे चोपमानतः ॥ १६२ ॥
कर्तुः क्यङ् वा भृशादिभ्यो भवत्यर्थे सलोपकः ।
डाजन्तात् क्यष् भवत्यर्थे लोहितादिभ्य एव च ॥ १६३ ॥
सत्रात् कक्षात् कष्टकृच्छ्रगहनेभ्यश्चिकीर्षति ।
पापमर्थे, कष्टशब्दादुत्साहेऽर्थे क्यङिष्यते ॥ १६४ ॥
रोमन्थं वर्तयति च तपश्चरति कर्मणः ।
बाष्पोष्मफेनादुद्वमने, कलहाच्छब्दवैरयोः ॥ १६५ ॥
तथा कण्वाभ्रमेघेभ्यः करोत्यर्थे च कर्मणः ।
सुदिनाद् दुर्दिनान्नीहाराद्भवत्यर्थे एव च ॥ १६६ ॥
सुखादिभ्यस्तथा कर्तृवेदनायां क्यङो विधिः ।
क्यच् नमोवरिवश्चित्रङः स्यात्, क्विप् नाममात्रतः ॥ १६७ ॥
आचारार्थे च मुण्डादिसत्यादिभ्यां च णिच् मतः ।
प्रयोजकस्य व्यापारे वाच्ये च प्रेषणादिके ॥ १६८ ॥
पौनःपुन्ये भृशार्थे चैकाचो धातोर्हलादितः ।
सूच्यादेश्च, तथा गत्यर्थेभ्यः कौटिल्य एव हि ॥ १६९ ॥

लुपादेर्भावगर्हायां यङ्, लुक् तस्यां च बाहुलात् ।
कण्ड्वादिभ्यो यगायस्तु गुपेर्धूपेः पणेः पनेः ॥ १७० ॥
विच्छेश्च, स्याद् ऋतेरीयङ्, कमेर्णिङ् स्वार्थ एव हि ।
पुच्छादुदसने पर्यसने च व्यसने भवेत् ॥ १७१ ॥
भाण्डात्समाचयनके, चीवरादर्जने तथा ।
परिधाने, सनाद्यन्ता द्वादशामी प्रकीर्तिताः ॥ १७२ ॥
येष्वर्थेषु लकाराः स्युस्ते कथ्यन्ते विशेषतः ।
भूतानद्यतने चैव परोक्षे लिट् प्रकीर्तितः ॥ १७३ ॥
अत्यन्तापह्नवेऽप्येव लङ्लिटौ तु प्रकीर्तितौ ।
हकारशश्वतोर्योगे प्रश्ने चासन्नकालके ॥ १७४ ॥
भूते लुङ् ननुयोगे तु लट् च पृष्टोत्तरे मतः ।
नुनयोगे तु कथितौ लुङ्लटौ च तदर्थके ॥ १७५ ॥
भूतानद्यतने लङ् च, स्मयोगे लट् प्रकीर्तितः ।
स्मं विहाय पुराशब्दयोगे प्रोक्तौ तु लङ्लटौ ॥ १७६ ॥
साकाङ्क्षे लङ्लृटावुक्तावभिज्ञावचने बुधैः ।
यद्योगेन विनाऽभिज्ञावचने तु लृडेव हि ॥ १७७ ॥
वर्तमाने च लट् प्रोक्तो भविष्यति तु लृट् स्मृतः ।
लुडनद्यतने ख्यातो भविष्यति, निपातयोः ॥ १७८ ॥
यावत्पुराशब्दयोस्तु योगे लट् नान्य एव हि ।
लिप्सायां चैव किंवृत्ते कदाकर्हियुते तथा ॥ १७९ ॥
लोडर्थलक्षणे चैव संसिद्धौ लिप्स्यमानतः ।
लट् स्मृतश्च यथाप्राप्तौ लृट्लुटौ परिकीर्तितौ ॥ १८० ॥
ऊर्ध्वमौहूर्तिके काले लोडर्थे लिङ्लटौ तथा ।
समीपे वर्तमानस्य भूते वाथ भविष्यति ॥ १८१ ॥
भूते भूता वर्तमाना भविष्यन्तो भविष्यति ।
वर्तमानाश्च ला उक्ता आशंसायां तु लुङ्लटौ ॥ १८२ ॥
लट् चाथो, क्षिप्रपर्याये लृट् स्यादुपपदे किल ।
लिङाशंसावाचिन चोपपदे गदितस्तथा ॥ १८३ ॥
क्रियासातत्यसामीप्ये भूते लुङ् लृट् भविष्यति ।
मर्यादोक्तावहोरात्रभिन्नकालांशके च वै ॥ १८४ ॥
अवरस्मिन् लृट्, परस्मिन् लृट्लुटौ च भविष्यति ।
सर्वत्र लिङ्निमित्ते तु क्रियाऽनिष्पत्तिसूचने ॥ १८५ ॥
भविष्यति लृङेव स्याद्, उताप्योरित्यतः पुरः ।
भूते वा लृङ्, ततोऽग्रे तु नित्यं भूतेऽपि लृङ् भवेत् ॥ १८६ ॥
गर्हायां जात्वपियुते लट् च कालत्रये मतः ।
कथंयोगे च गर्हायां कालमात्रेऽपि लिङ्लटौ ॥ १८७ ॥
अन्येऽपि स्वस्वकाले स्युर्लकारास्तत्र चैव हि ।
किंवृत्ते गर्हणे प्रोक्तौ लिङ्लटौ, तद्विनापि च ॥ १८८ ॥
क्षमासम्भावनार्थेऽथो तयोरेव तु सूचने ।

अस्त्यर्थे किंकिलार्थे च लृडेव परिकीर्तितः ॥ १८९ ॥
यच्चयत्रयदाजातुयदियद्युजि लिङ् मतः ।
यच्चयत्रयुते चैव चित्रीकरणके तथा ॥ १९० ॥
गर्हायां तु लिडेवाऽर्थादधिकोक्तौ न लिङ् भवेत् ।
लृट स्यादुपपदे यच्चयदियत्रविभिन्नके ॥ १९१ ॥
विस्मयीकरणे चाथो, उताप्योस्तु समर्थयोः ।
योगे लिङ्, इत ऊर्ध्वं तु भूतेऽपि नियतो हि लृङ् ॥ १९२ ॥
कच्चिद्योगं विना स्वाभिप्रायाविष्करणे तु लिङ् ।
सिद्धाप्रयोगे प्रौढ्यर्थे लिङ् च सम्भावने मतः ॥ १९३ ॥
तत्रैव सम्भावनार्थे धातावुपपदेऽपि च ।
यद्योगरहिते लिङ् स्याद्यथाप्राप्तश्च लृट् तथा ॥ १९४ ॥
हेतुहेतुमतोर्लिङ् च भविष्यति मतो बुधैः ।
इच्छार्थके तूपपदे स्वाभिप्रायप्रकाशने ॥ १९५ ॥
प्रैषादिविध्याद्यर्थे च मुहूर्तादूर्ध्वके तथा ।
आशीरर्थे च लिङ्लोटौ, योग्यशक्यार्थके त्वथो ॥ १९६ ॥
यच्छब्दोपपदे काले वेलायां समयेऽपि च ।
समानकर्तृकेच्छार्थोपपदेऽपि लिडेव हि ॥ १९७ ॥
समानकर्तृकेच्छार्थोपपदे वर्तमानके ।
इच्छार्थे लट्लिङौ च, स्मयोगे चाऽधीष्टके तथा ॥ १९८ ॥
प्रैषाद्यर्थे प्राप्तकाले मुहूर्तोर्ध्वे स्मयोगके ।
लोट्, माङ्युपपदे लुङ् स्यात्, स्मोत्तरे लङ्लुङौ मतौ ॥ १९९ ॥
तिङ्वाच्यायाः क्रियायास्तु प्राधान्यादनुरोधतः ।
तथा गुणक्रियावाचिशब्देभ्यः प्रत्यया मताः ॥ २०० ॥
पौनःपुन्ये भृशार्थे च लोट् स्यात् हिस्वौ ततो न तिङ् ।
अनुप्रयोगो धातोश्च तद्बोधार्थं ततो मतः ॥ २०१ ॥
लोटः प्रकृतिभूतोऽसौ, विकल्पेन समुच्चये ।
मन्योपपदकाद्धातोर्मध्यमः पुरुषो भवेत् ॥ २०२ ॥
मन्येतस्तूत्तमः प्रोक्तः स चैकार्थस्य वाचकः ।
भावकर्मव्यवस्था तु व्यवस्था कर्तृकर्मणः ॥ २०३ ॥
तथाऽऽत्मनेपदस्यापि परस्मैपदकस्य च ।
व्यवस्था मूलतो ज्ञेया विस्तराच्चेह कथ्यते ॥ २०४ ॥
लव्यात्मनेपदं बोध्यमेकारान्तं विचक्षणैः ।
परस्मैपदमाख्यातमिकारान्तं तथा लटि ॥ २०५ ॥
इति सङ्क्षेपतः प्रोक्त एष तिङ्सङ्ग्रहः किल ।

## अथ कृत्कुसुमम् ।

धातोः कृत्प्रत्यया बोध्याः कर्त्रादित्रितयार्थके ॥ २०६ ॥
भूतादिकालत्रितये निरूप्यन्ते समासतः ।
कृत्याः खलर्थाः क्तश्चापि सकर्मभ्यस्तु कर्मणि ॥ २०७ ॥

अकर्मकेभ्यो भावे स्युः, कर्तरि प्रत्ययाः परे ।
अर्हशक्यार्थयोः प्रैषे प्राप्तकालातिसर्गयोः ॥ २०८ ॥
भवन्ति प्रत्ययाः कृत्यास्तृजर्हार्थे तथेऽप्यते ।
तव्यत्तव्याऽनीयरस्तु धातुभ्यः केलिमर् भवेत् ॥ २०९ ॥
पवर्गान्तादटुपधादजन्ताद् यत् शकेः सहेः ।
एतिस्तुशास्वृदृजुषः क्यप् स्याद् ऋदुपधादपि ॥ २१० ॥
आवश्यके उकारान्ताण्ण्यद् ऋकारहलन्ततः ।
ण्वुल्तृचौ सर्वधातुभ्यो, नन्दिग्रहिपचादितः ॥ २११ ॥
ल्युणिन्यचः क्रमात्, कस्तु ज्ञाप्रीगुपधकात्किरः ।
उपसर्गे तथाऽऽदन्तात्, पाघ्राध्माधेङ्दृशस्तु शः ॥ २१२ ॥
ज्वलादिभ्यः कसन्तेभ्यः श्यैङाद्भ्यस्तु णः स्मृतः ।
प्रुसृल्वः साधुकारित्वे वुन् स्यादाशिषि सर्वतः ॥ २१३ ॥
कर्मण्युपपदे ह्वावामश्चाऽण्, अनुपसर्गतः ।
सुबन्ते वा उपपदे आदन्तात्कः समीरितः ॥ २१४ ॥
गापाभ्यां नोपसृष्टाभ्यां टक्, हृञोऽनुद्यमेऽच् स्मृतः ।
शेतेरच् चाऽधिकरणे, चरेष्टोऽपि कृञस्तु सः ॥ २१५ ॥
हेतुताच्छील्यानुलोम्ये कर्मार्थे पूर्ववत् स्मृतः ।
ण्यन्तादेजेः खशन्येभ्योऽप्ययं, प्रियवशे वदः ॥ २१६ ॥
खच् भुवः करणे भावे ह्यादितोपपदे च सः ।
कृञः क्षेमे प्रिये मद्रे खजणौ स्तो, गमेस्तु खच् ॥ २१७ ॥
अन्ताद्युपपदे डश्च, क्विन् स्पृशोऽनुदके सुपि ।
क्विन्नन्ता ऋत्विगाद्याः स्युरज्ञानार्थाद् दृशेस्तु कञ् ॥ २१८ ॥
क्विन् च त्यदाद्युपपदे, ण्विः सोपपदकाद्भजेः ।
मनिन्क्वनिप्वनिप्विच्क्विप् धातोः स्युः, स्थस्तु कक्विपौ ॥ २१९ ॥
अजात्यर्थे सुपि णिनिस्ताच्छील्येऽथ व्रतेऽपि च ।
उपमाने तथा कर्तर्याभीक्ष्ण्ये बहुलं च सः ॥ २२० ॥
इतः स्युः प्रत्यया भूते, णिनिः स्यात्करणे यजः ।
हनः कर्मणि च, क्विप् तु ब्रह्मणि भ्रूणवृत्रयोः ॥ २२१ ॥
अग्नेश्चिञः कृञः पुण्यपापमन्त्रसुकर्मसु ।
दृशेः क्वनिप् जनेर्डः स्यादन्येभ्योऽन्यार्थकेऽपि च ॥ २२२ ॥
कर्तरि क्तवतुर्भूते, भूते क्तो भावकर्मणोः ।
स्पष्टार्थोक्तानुवादोऽयमथ क्तस्त्वादिकर्मणि ॥ २२३ ॥
गत्यर्थाकर्मकश्लिषशीङ्स्थादिभ्यः कर्मणि कर्तरि ।
भावे, तथाधिकरणे ध्रौव्यगत्यशनार्थकात् ॥ २२४ ॥
मतिबुद्ध्यर्चनाद्यर्थधातुभ्यो, ञीत एव च ।
वर्तमानार्थके क्तः स्यात्, क्लीबे भावे तु सर्वदा ॥ २२५ ॥
लिटः कानच्क्वसू धातोः, क्वसुः सदवसश्रुवः ।
इति भूताधिकारोऽभूत्, लटः स्तः शतृशानचौ ॥ २२६ ॥
सम्बोधने क्रियायास्तु हेत्वर्थाल्लक्षणार्थकात् ।

एष्वर्थेषु लटस्तौ स्तः नाम्न्याक्रोशे च कर्हिचित् ॥ २२७ ॥
चानश् भवेत् ताच्छील्यवयोवचनशक्तिषु ।
इतः क्विबन्तं तच्छीले तद्धर्मणि च कर्तरि ॥ २२८ ॥
तत्साधुकारिणि तथा प्रोच्यन्ते प्रत्ययाः पुरः ।
तृन् सर्वेभ्यः, सम्पृचादिकेभ्यश्चादिभ्यो घिनुण् मतः ॥ २२९ ॥
हलादेरनुपधाच्चेतः, साकाङ्क्षाच्चानर्थे तात् ।
अकर्मकात्, अथालङ्कृञ्ण्यादिभ्यश्चैव इष्णुच् स्मृतः ॥ २३० ॥
उः सनाशंसभिक्षिभ्यः, क्विप् सर्वेभ्योऽपि दृश्यते ।
इष्णुच् क्नुस्क्रुक्लुकनः ग्स्नुक्रुक्लुकन्याद्रुजिरिनिः क्मरच् ॥ २३१ ॥
घुरच् कुरच् क्वरप् च, षाकन् आलुर्वीजिङ् वरच् ।
रुः किकिनः क्रुक्लुकनौ सहान्यैरिति पृथक् पृथक् ॥ २३२ ॥
प्रत्यया भिन्नधातुभ्यो विज्ञेया मूलतः खलु ।
वर्तमाने तथा भूते बहुलं स्युरुणादयः ॥ २३३ ॥
तुमुन्ण्वुलौ क्रियार्थायां क्रियायां, केवलस्तुमुन् ।
समानकर्तृकेऽहत्यर्थे कालादौ च शकादिके ॥ २३४ ॥
पूर्णतावाचिसामर्थ्यवाचिन्युपपदे भवेत् ।
भावे इत्यधिकृत्योक्तास्ते भाववचनाः स्मृताः ॥ २३५ ॥
क्रियार्थायां क्रियायां तु ण्वुलाद्याः स्युर्भविष्यति ।
अण् च कर्मण्युपपदे, घञ् कर्तरि पदादितः ॥ २३६ ॥
भावे च सर्वधातुभ्यो ह्यन्यकर्तरि कारके ।
अजेदन्ताद्धातुमात्राद् ऋकारान्तादुदन्ततः ॥ २३७ ॥
क्वचिद्भावे च करणे कर्मण्यपि मतः क्वचित् ।
ड्वितः क्त्रिश्च ट्वितोऽथुच् च, यजादिभ्यश्च नङ् स्मृतः ॥ २३८ ॥
उपसर्गे च घोः किः स्यात्, कर्मण्युपपदे तथा ।
आधारे, चाथ भावादौ स्त्रियां क्तिन् परिकीर्तितः ॥ २३९ ॥
क्यप् भावे तु व्रजयजोः, संज्ञायां समजादितः ।
प्रत्ययान्ताद्धलन्ताच्च गुरोश्च मतः स्त्रियाम् ॥ २४० ॥
भिदादिभ्यः षितश्चाऽङ् स्यात्, ण्यासश्रन्थो युजित्यपि ।
अर्हणोत्पत्तिपर्यायार्थेषु ण्वुच् परिकीर्तितः ॥ २४१ ॥
भावे नपुंसके ल्युट् क्तौ, कर्मण्युपपदे तथा ।
कर्तुः कायसुखं येन संस्पर्शाल्ल्युट् ततः स्मृतः ॥ २४२ ॥
करणे चाधिकरणे, संज्ञायां प्रायशस्तु घः ।
हलन्ताद्धातुतो घञ् स्यात्, कृच्छ्राऽकृच्छ्रार्थकेषु तु ॥ २४३ ॥
भावे कर्मण्युपपदेष्वीषद्दुःसुषु खल् मतः ।
कर्मकर्त्रोर्भूकृञोः स्यात्, आदन्ताच्चैव युच् मतः ॥ २४४ ॥
आवश्यकाधमर्ण्यार्थे णिनिः, कृत्याश्च कीर्तिताः ।
नाम्नि धातोराशिषि च क्तिच्क्तौ च परिकीर्तितौ ॥ २४५ ॥
अलङ्खल्वोरुपपदयोर्निषेधे क्त्वा प्रकीर्तितः ।
एककर्तृकयोर्धात्वर्थयोः क्त्वा पूर्वकालके ॥ २४६ ॥

अर्थेऽस्मिन्नेव चाभीक्ष्ण्ये णमुल् धातोः प्रकीर्तितः ।
कर्मोपपद आक्रोशे गम्ये चैव खमुञ् मतः ॥ २४७ ॥
समूलादिप्रयोगेषु धातुतश्च कषादितः ।
स्वानुप्रयोगयुक्ताच्च, करणे कर्तृकर्मणोः ॥ २४८ ॥
अपादानेऽधिकरणे तथा चोपपदे णमुल् ।
द्वितीयायां तृतीयां सप्तम्यां च क्वचिद्भवेत् ॥ २४९ ॥
अर्थेषु विविधेष्वेव विविधोपपदेषु च ।
धातुभ्यो विविधेभ्यश्च णमुल् ज्ञेयो हि मूलतः ॥ २५० ॥
इत्थं समासतः प्रोक्तो बालानां सुखसिद्धये ।
सङ्ग्रहः कारकादीनां तेन तुष्यतु सज्जनः ॥ २५१ ॥

इति सज्जनेन्द्रप्रयोगकल्पद्रुमकारिकाः ।



॥ श्रीः ॥

# सज्जनेन्द्रप्रयोगकल्पद्रुमस्य विषयानुक्रमणिका ।



(१) भेदोऽयं प्राचामनुरोधेन ।

इति ।

॥ श्रीः ॥

# धर्माधिकारिकृष्णपण्डितविरचितः

# सज्जनेन्द्रप्रयोगकल्पद्रुमः ।

उत्सङ्गस्थितजन्हुपर्वतसुते आलिङ्ग्य बाहुद्वये-
नैकेनेतरकेण वक्त्रकमले उल्लास्य चुम्बंस्तयोः ।
स्वास्याभ्यां युगपत्, पराणि च वृथा त्रीणीति खेदं वहन्
पायाच्छङ्कर आशु पञ्चवदनः क्रीडोत्सुकः सर्वतः ॥

भुवनानि शालभञ्जीभुवनानीव प्रदर्शयन्त्यनिशम् ।
प्रतिभाविमानरूढं कविमाराज्जयति सा वाणी ॥

शास्त्रागाधसरित्पतिमवगाहे तर्कनक्रोग्रम् ।
पल्वलमिव यत्कृपया तं वन्दे सद्गुरुं प्रीत्या ॥

स जयति महीमहेन्द्रो बहुविधविरुदावलीभिरुद्गीतः ।
उदयपुरेशो **राणासज्जनसिंहो** महाराजः ॥

तद्गुणकीर्तनहेतोः सुलभव्युत्पत्तये च बालानाम् ।
कारकसमासतद्धितयुततिङ्कृत्प्रत्ययान्तशब्दानाम् ॥

दुर्बोधमल्पविषयं दृष्ट्वा वररुचिकृतं प्रयोगमुखम् ।
सुखबोध एष रम्यो बहुविषयोऽप्रक्रियाक्लेशः ॥

सोदाहरणश्लोकः काव्ये शब्दानुशासने च हितः ।
**सज्जननृपकीर्तिकरः** सगूढविवृतिश्च कारिकाबद्धः ॥

पुरहरपुरवसतिमता विदुषा **धर्माधिकार्युपाख्येन** ।
**कृष्णेन सज्जनेन्द्रप्रयोगकल्पद्रुमः** क्रियते ॥

हंसा इव पानीयं प्रमादकृतदोषमपहाय ।
पय इव गुणं गृहीत्वा नन्दन्तु प्रार्थनेयं मे ॥

अथादौ कारककुसुमम् ।

**अथ प्रयोगं जिज्ञासुर्जानीयात् कारकं पुरा ।**
**संज्ञाभिः षड्विधं प्रोक्तं ता उच्यन्ते पृथक् पृथक् ॥**

प्रयुज्यत इति प्रयोगो वाक्यरचना । ताः संज्ञा आह—

'कर्ता कर्म च करणं सम्प्रदानं तथैव च ।
अपादानाऽधिकरणमित्याहुः कारकाणि षट्' ॥

ननु षष्ठ्यर्थस्य सम्बन्धस्य कारकत्वेन सप्त कारकाणि भवितुमर्हन्ति, कथं षट् कारकाणि ? इति चेदुच्यते—सम्बन्धस्य कारकत्वं नास्ति, क्रियायामन्वयाभावात् । क्रियान्वयित्वं हि कारकत्वम् । क्रियाशब्देनात्र धात्वर्थो गृह्यत इति षडेव कारकाणि । कर्तृभेदानाह—

**कर्ता स्वतन्त्र इत्युक्तः स चतुर्विध ईरितः ।**
**उक्तोऽनुक्तस्तथा हेतुः कर्मकर्ता चतुर्थकः ॥**

क्रियासिद्धौ यः परापेक्षां न करोति स स्वतन्त्र उच्यते । उक्तं च—

'प्रवृत्तौ च निवृत्तौ च कारकाणां य ईश्वरः ।
अप्रयुक्तः प्रयुक्तो वा कर्ता कारकमुच्यते' ॥

'स्वतन्त्रः कर्ता' (१।४।५४) इति कर्तृसंज्ञा । कर्तरि का विभक्तयो भवन्तीत्याह—

**तत्र कर्तर्यभिहिते प्रथमैव विधीयते ।**
**तृतीया चाऽथवा षष्ठी स्मृताऽनभिहिते तथा ॥**

अभिधानं च प्रायेण तिङ्कृत्तद्धितसमासैः । उक्तकर्ता यथा—

दिने दिने सज्जनसिंहभूपः करोति धर्मं समुदर्कबीजम् ।
रतिं (१) सुधीभिर्भजते सहास्मादुपैति लक्ष्मीं परिवर्धमानाम् ॥

अत्र 'करोति भजते उपैति' इत्यत्र कर्तरि लडादेशात्तिङो विहितत्वेन कर्तुरुक्तत्वात् 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (२।३।४६) इति प्रथमा विभक्तिः । पुण्यकरणे रतिसेवने लक्ष्मीप्राप्तिकरणे च सज्जन-

(१) मैत्रीं''' सहास्मात्प्राप्नोति ।

सिंहस्य स्वतन्त्रकर्तृत्वम् । यथा वा-

स जयति सज्जनसिंहः प्रकृतिषु शाठ्यं न यस्यास्ति ।
यत्सदसि व्यवहारः सम्प्रतिपन्नः सदा भवति ॥

अत्र 'जयति अस्ति भवति' इत्यकर्मकक्रियापदयोगेन कर्तुरभिहितत्वमिति विशेषः । अनुक्तकर्ता यथा--

पूर्वाह्णे चर्यते धर्मोऽपराह्णेऽर्थो विचिन्त्यते ।
नक्तं संसेव्यते कामः सज्जनेन्द्रेण सर्वदा ॥

अत्र 'चर्यते विचिन्त्यते संसेव्यते' इत्यत्र तिङा कर्मणोऽभिहितत्वेन कर्तुरनुक्तत्वात् 'अनभिहिते' (२।३।१) इत्याधिकारे 'कर्तृकरणयोस्तृतीया' (२।३।१८) इति कर्तरि तृतीया । षष्ठी यथा—

विहाय भूपतीनन्यानवदान्यानधार्मिकान् ।
सेव्यः सज्जनभूजानिर्जनानां जीविकार्थिनाम् ॥

अत्र 'सेव्यः' इति कृत्प्रत्ययेन कर्मण उक्तत्वात् कर्तर्यनुक्ते 'कृत्यानां कर्तरि वा' (२।३।७१) इत्यनेन 'जनानाम्' इति षष्ठी । पक्षे तृतीया च । हेतुकर्ता यथा—

श्रीमान् सज्जनसिंहोऽयं शर्म प्रापयति प्रजाः ।
न्यायैः संदण्डय निकृतानिक्ष्वाकुरिव धर्मदृक् ॥

अत्र 'प्रजाः सुखं प्राप्नुवन्ति, ताः प्रजाः सज्जनसिंहः सुखं प्रापयती'त्यर्थः । सुखप्राप्तिक्रियायां प्रजानां स्वतन्त्रकर्तृत्वम्, तासामयं तत्प्राप्तौ प्रयोजयतीति हेतुरुच्यते । 'तत्प्रयोजको हेतुश्च' (१।४।५५) इति हेतुसंज्ञा, चकारात् कर्तृसंज्ञा । 'प्रापयति' इति हेतुमण्णिजन्तक्रियापदम् । 'हेतुमति च' (३।१।२६) इति णिच् । कर्मकर्ता, कर्म चासौ कर्ता चेति कर्मधारयः । कर्म भूत्वा कर्ता भवतीत्यर्थः । यथा--

दृश्यते स्वयकमेव खलस्य दोष आशु नयवर्त्मनि नूनम् ।
विद्यमान इह सज्जनसिंहे भिद्यते च रिपुमन्त्रणमेवम् ॥

अत्र सज्जनसिंहो दोषं पश्यतीति दोषस्य कर्मत्वम्, स च दर्शनक्रियायामानुकूल्यं भजमानः स्वयमेवात्मानं दर्शयतीति कर्मकर्ता भवति ।

'कर्मवत्कर्मणा तुल्यक्रियः' (३।१।८७) इति कर्मवद्भावः। कार्यातिदेशोऽयम् न तु कर्तुः कर्मसंज्ञा, तेन यगात्मनेपदे भवतः। तिङ् तु कर्तर्येव, तेन कर्तुरुक्तत्वात् 'प्रातिपदिकार्थे'त्यादिना प्रथमा। इति कर्तृकारकम्।

अथ कर्मकारकम्।

**क्रियाफलाश्रयं कर्म तच्चतुर्विधमीरितम्।**
**उक्तानुक्ते कर्तृकर्माकथितं चेति, ते पुनः।**
**उक्तानुक्ते द्विधा प्रोक्ते ईप्सितानीप्सिते इति॥**

कर्तुर्व्यापारस्य फलं यत्र तिष्ठति तत् कर्मेत्यर्थः। कर्मणि का विभक्तयो भवन्तीत्याह—

**प्रथमाऽभिहिते कर्मण्यनुक्ते तु द्वितीयिका।**
**तृतीया च चतुर्थी च षष्ठी चैव भवन्ति हि॥**

अभिहितेप्सितं यथा—

कदाचिद्रन्तुकामस्य सज्जनेन्द्रस्य मन्त्रिणा।
सभ्यैः सार्धं राजकार्यं क्रियते तत्त्वदर्शिना॥

अत्र 'क्रियते' इति क्रियायाः फलं राजकार्यमेवाश्रयतीति तस्य कर्मत्वम्। तिङा कर्मणोऽभिहितत्वात् प्रथमैव। राजकार्यस्येष्टत्वात् 'कर्तुरीप्सिततमं कर्म' (१।४।४९) इति कर्मसंज्ञा। अभिहितानीप्सितं यथा—

आरामे सज्जनेन्द्रेण लसत्कुसुमसङ्कुले।
तरोः सञ्छिद्यते पत्रं कुसुमानि विचिन्वता॥

अत्र अवचयक्रियायां कुसुमानामीप्सितत्वम्, पत्रच्छेदनस्येष्टत्वाऽभावात् पत्रस्यानीप्सितत्वम्। अभिहितत्वं प्राग्वत्। अनुक्तेप्सितं यथा—

प्रकृतिगतचरित्रं वीक्षते चारनेत्रैः
सपदि तदनुकूलं कार्यजातं करोति।
त्यजति न हि कदाचित् स्वीयधर्मानुसारं
निजकुलसमकृत्यः सज्जनोर्वीबिडौजाः॥

अत्र वीक्षणादिक्रियाणां फलं चरित्रादिषु वर्तत इति तेषां कर्मत्वमिष्टत्वादीप्सितत्वम् । 'वीक्षते' इत्यादिषु तिङा कर्तुरुक्तत्वेन कर्मणोऽनुक्तत्वात् 'अनभिहिते' (२।३।१) इत्यधिकारे 'कर्मणि द्वितीया' ( २।३।२ ) इति द्वितीया । अनुक्ताऽनीप्सितं यथा —

सपत्नसङ्घा भुवि सज्जनेशितुर्भयेन कुत्रापि सुनिश्चलस्थितिम् ।
अलं समुद्विग्नहृदो न कर्तुमप्यदन्ति घोरं सहसा हलाहलम् ॥

अत्र भक्षणक्रियायां हलाहलविषस्याऽनीप्सितत्वं स्पष्टमेव । 'तथायुक्तं चाऽनीप्सितम्' (१।४।५०) इति कर्मसंज्ञा । अनुक्तत्वं प्राग्वदेव । तृतीयाचतुर्थीषष्ठ्यो यथा —

सञ्जानीते कोशगुप्त्या मृगयायै व्रजत्यपि ।
कारको व्यवहारस्य सज्जनः पृथिवीपतिः ॥

अत्र सम्पूर्वकजानातिक्रियायोगे 'कोशगुप्त्या' इति 'संज्ञोऽन्यतरस्यां कर्मणि' ( २।३।२२ ) इति कर्मणि तृतीया । कोशगुप्तिं सञ्जानातीत्यर्थः । एवं 'मृगयायै' इत्यत्र 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' ( २।३।१२ ) इति गत्यर्थकव्रजधातुयोगेऽध्वभिन्नमृगयारूपकर्मणि चतुर्थी । मृगयां व्रजतीत्यर्थः । तथा 'व्यवहारस्य' इत्यत्र 'कारकः' इति कृत्प्रत्यययोगे 'कर्तृकर्मणोः कृति' ( २।३।६५ ) इति कर्मणि षष्ठी । कर्तृकर्म यथा —

देशं देशं गमयति चरान् , बोधयत्यर्थजातं
कार्याध्यक्षान्, क्षितिसुरगणान् भोजयत्युत्तमान्नम् ।
कृत्वा शालां बहुविधकलाः पाठयत्येव सर्वान्
राष्ट्रे प्रीत्याऽऽसयति गुणिनः सज्जनक्षोणिपालः ॥

अत्र देशं देशं चरा गच्छन्ति, तान् सज्जनक्षोणिपालो गच्छ गच्छेति प्रयुङ्क्ते । गमयति चरान् देशं देशं सज्जनक्षोणिपालः । एवं बुध्यन्तेऽर्थजातं कार्याध्यक्षाः, तानयं प्रयुङ्क्ते इत्यादि बोध्यम् । प्रयुङ्क्ते इत्यनेन तस्य हेतुत्वात् 'हेतुमति च (३।१।२६) इति णिचि 'गमयति' इत्यादि ।

चरादीनां कर्मसंज्ञा तु 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ' ( १।४।५२ ) इत्यनेन । अयमर्थः—गत्यर्थानां बुद्ध्यर्थानां प्रत्यवसानार्थानां शब्दकर्मकाणामकर्मकाणां च धातूनां योगेऽण्यन्तावस्थायां यः कर्ता स ण्यन्तावस्थायां कर्म भवति । 'कर्मणि द्वितीया' ( २।३।२ ) इति द्वितीया । गत्यर्थकेषु नीधातुवहधातुयोगे न भवति, प्रत्यवसानं भक्षणं तदर्थेषु अद्खादधात्वोर्न, भक्षधातोरहिंसार्थस्य न, जल्पत्यादियोगेऽपि भवति, दृशिधातोरपि भवति, शब्दायतेर्न, एवं हृकृधातुयोगेऽपि भवतीति । अकथितं कर्म यथा—

काँश्चिद्रुणद्धि निगडं धनं दण्डयतीतरान् ।
खलान् यथार्थदर्शी सन् सज्जनेशः सभागतः ॥

अत्र 'रुणद्धि दण्डयति' क्रिययोः फलाश्रयीभूतैः खलैः कर्मभिर्युज्यमानत्वान्निगडबन्धनयोरकथितकर्मसंज्ञा । येषां कर्मभिर्युज्यमानानि अकथितकर्मसंज्ञकानि भवन्ति, ते धातवः परिगणिताः । तथा हि—

'दुह्याच्पच्दण्ड्रुधिप्रच्छिचिब्रूशासुजिमथ्मुषाम् ।
कर्मयुक् स्यादकथितं तथा स्यान्नीहृकृष्वहाम्' ॥

दुहादीनां द्वादशानां तथा नीप्रभृतीनां चतुर्णां कर्मणा यद् युज्यते तदेवाऽकथितं कर्मेत्यर्थः । एवमन्येषामप्युदाहार्यम् । कर्मान्तरमाह—

**योगेऽकर्मकधातूनां देशकालक्रियाऽध्वनम् ।**

कर्मेति शेषः । यथा—

यः पालयन् प्रजाः सर्वा मेदपाटं विराजते ।
आस्तां स सज्जनः श्रीमान् शतवर्षमनामयः ॥

अत्र 'विराजते आस्ताम्' इत्यकर्मकधातुयोगे देशकालवचनयोः मेदपाटशतवर्षयोः कर्मत्वम् । 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञक इति वाच्यम्' इति कर्मसंज्ञा । इति कर्मकारकम् ।

अथ करणकारकम् ।

**क्रियोपकारकं यत्तत् करणं त्वेकमेव हि ।**

तत्र का विभक्तयो भवन्तीत्याह--

**तृतीया पञ्चमी चैव षष्ठी च करणे भवेत् ॥**

तृतीया यथा--

छन्दोऽलङ्कृतिकाव्यनाटककलाकोशार्थशास्त्रादिक-
व्यासङ्गाप्तविचारतर्कविभवप्रोद्यन्मनीषावता ।
सर्वां 'श्यामलदान'मन्त्रिपतिना सप्ताङ्गराज्यस्य वै
श्रीमान् सज्जनसिंह एष वहति प्राज्यां धुरं नित्यशः ॥

अत्र सज्जनसिंहस्य सप्ताङ्गराज्यधूर्वहनक्रियायां श्यामलदानस्य प्रकृष्टोपकारकत्वात् करणत्वम्। 'साधकतमं करणम्' (१।४।४२) इति करणसंज्ञा। 'अनभिहिते' (२।३।१) इत्यधिकारे 'कर्तृकरणयोस्तृतीया' (२।३।१८) इति तृतीया। पञ्चमी यथा—

व्यवहारगुरुत्वेऽपि बुद्धिमान् सज्जनाधिपः ।
कार्याकार्यातिचिन्तायाः स्तोकान्मुक्तो हि जायते ॥

अत्र कार्याकार्यचिन्ताया मुक्तौ स्तोकस्य करणत्वम्। 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्याऽसत्त्ववचनस्य' (२।३।३३) इति पञ्चमी। षष्ठी यथा—

चातुर्यौदार्यधैर्यप्रभृतिगुणगणालङ्करिष्णोः सहिष्णोः
षाड्गुण्योपायनीतिव्यवहृतिविदुषः स्वप्रधानोत्तमस्य ।
'पन्नालालस्य' जानात्यतिविशदमतिः सूक्ष्मदृक् सावधानो
राज्यीयं गूढतत्त्वं स्वपरविषयगं सज्जनो भूमहेन्द्रः ॥

अत्र अज्ञातस्य गूढतत्त्वस्य 'जानाति' इति ज्ञानक्रियायां पन्नालालस्य साधकतमत्वात् करणत्वम्। 'ज्ञो विदर्थस्य करणे' (२।३।५१) इति करणे षष्ठी। इति करणकारकम्।

अथ सम्प्रदानकारकम्।

**क्रियया यमभिप्रैति सम्प्रदानं स उच्यते।**

तत्र का विभक्तयो भवन्तीत्याह—

**चतुर्थी च तृतीया च भवतः सम्प्रदानके ॥**

चतुर्थी यथा—

वर्षाऽशनानि भूमिं च वाहनानि गृहाणि च ।
गाः स्वर्णं च द्विजातिभ्यः सज्जनेन्द्रो ददात्यलम् ॥

अत्र 'ददाति' इति दानक्रियायां द्विजातय आभिमुख्येन सम्बध्यन्त इति तेषां सम्प्रदानत्वम् । 'कर्मणा यमभिप्रैति स सम्प्रदानम्' (१।४।३२) इति सम्प्रदानसंज्ञा । 'चतुर्थी सम्प्रदाने' ( २।३।१३ ) इति चतुर्थी ।

तृतीया यथा--

संयच्छते भूषणानि दास्या यो यश्च, तादृशः ।
कदापि सज्जनेन्द्रस्य पुरो न स्थातुमर्हति ॥

अत्र यच्छब्दवाच्यकामुकस्य भूषणदानक्रियायां दास्याः सम्प्रदानत्वम् । 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति तृतीया । सम्प्रदानान्तराण्याह--

**रुच्यर्थानां प्रीयमाणः, श्लाघह्नुङ्स्थाशपां तु वै ।**
**ज्ञीप्समानो, धारयतेरुत्तमर्णस्तथेप्सितः ।**
**स्पृहे, राधीक्ष्योर्यस्य विप्रश्नः सम्प्रदानकम् ॥**

यथा--

रोचते सज्जनेन्द्राय विद्या, संश्लाघते वधूः ।
सौख्यं शिवो धारयति नित्यं स्पृहयति प्रजा ॥

अत्र रुचधातुयोगे प्रीयमाणत्वात् , श्लाघधातुयोगे बोधयितुमिष्टत्वात्, ण्यन्तधृधातुयोगे भक्त्या शिवकर्तृकसौख्यदानविषये उत्तमर्णत्वात् , स्पृहधातुयोगे प्राप्तुमिष्टत्वाच्च सज्जनेन्द्रस्य सम्प्रदानत्वम्। 'चतुर्थी सम्प्रदाने' ( २।३।१३ ) इति चतुर्थी । एवं राधीक्ष्योर्योगे । यथा--

त्रिस्कन्धज्यौतिषाभिज्ञ(१)स्तिथिपत्रं विलोकयन् ।
गणको (२) गणितं कुर्वन् सज्जनेन्द्राय राध्यति ॥

अत्र राधधातुयोगे प्रश्नसम्बन्धिनः सज्जनेन्द्रस्य 'राधीक्ष्योर्यस्य

---

( १ ) भिज्ञो जन्मपत्रं । ( २ ) सयुक्ति ।

विप्रश्नः' (१।४।३९) इति सम्प्रदानत्वम्। एवमीक्षधातुयोगेऽपि बोध्यम्।

**क्रुधद्रुहेर्ष्याऽसूयार्थयोगे यं प्रति कोपनम् ॥**

यथा—

शत्रवः सज्जनेन्द्राय ह्यसमर्था रणाजिरे।
क्रुध्यन्तीर्ष्यन्त्यसूयन्ति द्रुह्यन्ति च पुनः पुनः ॥

अत्र क्रुधादीनां धातूनां योगे सज्जनेन्द्रं प्रति कोपत्वात्तस्य 'क्रुधद्रुहेर्ष्याऽसूयार्थानां यं प्रति कोपः' (१।४।३७) इति सम्प्रदानत्वम्। इति सम्प्रदानकारकम्।

अथ अपादानकारकम्।

**विश्लेषेऽवधिभूतं यत् तदपादानमीरितम्।**

अत्र का विभक्तयो भवन्तीत्याह—

**पञ्चम्येव त्वपादाने वर्तते, न ततोऽन्यथा ॥**

यथा—

वदान्यः सज्जनेन्द्रोऽयमिति श्रुत्वा मनीषिणः।
देशाद्देशात्समायान्ति सत्कृताश्च व्रजन्त्यपि ॥

अत्र मनीषिणां सज्जनेन्द्रसमीपागमनाक्रियायां स्वदेशविश्लेषे तत्तद्देशानामवधिभूतत्वादपादानत्वम्। 'ध्रुवमपायेऽपादानम्' (१।४।२४) इति अपादानसंज्ञा। 'अपादाने पञ्चमी' (२।३।२८) इति पञ्चमी। अपादानान्तराण्याह—

**जुगुप्सार्थविरामार्थप्रमादार्थक्रियायुजि।**
**भयत्राणार्थधातूनां भयहेतावपीरितम् ॥**

यथा—

विरमति पापाद्धर्मात्प्रमाद्यति जुगुप्सते च दुःसङ्गात्।
गुरुतो बिभेति दुःखात् त्रायत इह सज्जनेट् सर्वान् ॥

अत्र विरामाद्यर्थकधातुयोगे पापादीनामपादानत्वम्। 'जुगुप्साविरामप्रमादार्थानामुपसंख्यानम्' इत्यपादानसंज्ञा। एवं 'बिभेति त्रायते'

इति योगे गुरुदुःखयोर्भयहेतुत्वात् 'भीत्रार्थानां भयहेतुः' (१।४।२५) इत्यपादानत्वम् ।

**परापूर्वस्य जयतेरसह्योऽर्थेऽपि तद्भवेत् ।**
**ईप्सिते वारणार्थानामपादानत्वमिष्यते ॥**

यथा—

सज्जनसिंहस्तं मुहुरध्ययनाद् यः पराजयते ।
उत्साहयति समस्तस्वराष्ट्रवास्तव्यविप्रेषु ॥

अत्र परापूर्वकजिधातुयोगेऽसह्यार्थस्याध्ययनस्य 'पराजेरसोढः' (१।४।२६) इत्यपादानत्वम् । वारणार्थयोगे यथा—

सज्जनसिंहः शत्रून् जित्वा लुण्ठत्सु तत्कोशान् ।
योद्धृषु वारयति द्राक् कांश्चिद्बहुमूल्यरत्नेभ्यः ॥

अत्र वारणक्रियायां बहुमूल्यरत्नानामीप्सितत्वादपादानत्वम् । 'वारणार्थानामीप्सितः' (१।४।२७) इत्यपादानसंज्ञा ।

**मां न पश्येदयमिति व्यवधाने यमिच्छति ।**
**तदपादानसंज्ञं स्यादाख्याता चोपयोगके ॥**

यथा—

सज्जनेन्द्रो महापातकिभ्यः सदाऽऽलीयते, वीक्षणं दुष्टमेषां यतः ।
संशृणोत्यादराद्धर्मशास्त्रं मुदा पण्डितेभ्यो मुहुर्धर्मरक्षाकृते ॥

अत्र महापातकिकर्तृकस्यात्मनो दर्शनस्याभावमिच्छतीति तस्यापादानत्वम् । 'अन्तर्धौ येनादर्शनमिच्छति' (१।४।२८) इत्यपादानसंज्ञा । तथा धर्मरक्षारूपोपयोगस्य सत्त्वात् तद्वक्तॄणां पण्डितानाम् 'आख्यातोपयोगे' (१।४।२९) इत्यपादानत्वम् ।

**जायमानस्य हेतुश्च भूकर्तुः प्रभवस्तथा ।**

यथा—

सज्जनभूपतिवंश्याः सूर्यांशात्संप्रजायन्ते ।
प्रभवन्ति चोदयपुरात्तस्मादेव प्रतापाढ्याः ॥

अत्र सज्जनभूपतिवंशीयानां सूर्यांशो हेतुरिति तस्य 'जनिकर्तुः

प्रकृतिः' ( १।४।३० ) इत्यपादानत्वम् । तथा भवनं भूरुत्पत्तिः, तत्कर्तॄणां तेषामुदयपुरं प्रभव इति तस्य 'भुवः प्रभवः' ( १।४।३१ ) इत्यपादानत्वम् । प्रभवत्यस्मिन्निति प्रभवः । 'अपादाने पञ्चमी' ( २।३।२८ ) इति पञ्चमी । इत्यपादानकारकम् ।

अथ अधिकरणकारकम् ।

**आधारश्चाधिकरणं तच्च त्रेधा प्रकीर्तितम् ।**
**अभिव्यापकमौपश्लेषिकं वैषयिकं तथा ॥**

तत्र का विभक्तय इत्याह—

**सप्तम्येवाधिकरणे सामान्यमिति कीर्तितम् ।**

अभिव्यापकं यथा—

द्रव्येषु स्वामिभावाद्, गुणिगणहृदये दातृभावात् , प्रजानां
स्वान्ते तातत्वतोऽन्तःपुरयुवतिजने वल्लभत्वाद्रिपूणाम् ।
चित्ते हन्तृत्वतोऽयं, खलकुलहृदये दण्डदत्वात् , सखीनां
चेतस्याह्लादकत्वाद इव विजयते सज्जनेन्द्रः समस्मिन् ॥

अत्र सज्जनेन्द्रस्य स्वामित्वादिहेतुभिर्द्रव्यादीनाभिव्याप्य स्थितिरिति द्रव्यादीनामभिव्यापकाधिकरणत्वम् । 'आधारोऽधिकरणम्' (१।४।४५) इत्यधिकरणसंज्ञा । 'सप्तम्यधिकरणे च ( २।३।३६ ) इति सप्तमी । औपश्लेषिकं यथा—

विमलतरजलाशयातिरम्ये दृढगिरिदुर्गवति प्रसन्नराष्ट्रे ।
सममुदयपुरे समस्तवर्णैर्निवसति सज्जनभूपतिः प्रवीरः ॥

अत्र सज्जनभूपतेर्निवासस्यैकदेशाश्रयत्वाद् उदयपुरस्यौपश्लेषिकमधिकरणत्वम् । वैषयिकं यथा—

सत्कर्मणि गुणज्ञाने प्रजानां परिपालने ।
सज्जनक्षोणिपालस्य स्पृहा नित्यं प्रवर्धते ॥

अत्र सज्जनक्षोणिपालस्य स्पृहायाः सत्कर्मादीनि विषया इति तेषां वैषयिकाधिकरणत्वम् । इत्यधिकरणकारकम् । इति कारकसामान्यम् ।

अथ कारकविशेषः ।

**योगे धातुविशेषाणां कारके कारकान्तरम् ।**
**तथैवार्थविशेषेण जायन्ते हि विभक्तयः ॥**

तत्रादौ कारके कारकान्तरमाह--

**कर्तुश्च सम्प्रदानत्वं करणत्वं च कर्मणः ।**
**कर्मत्वं करणस्यापि सम्प्रदानत्वमित्यपि ॥**
**सम्प्रदानस्य कर्मत्वमपादाने न किञ्चन ।**
**आधारे कर्मता चैवमित्येतत् कारकान्तरम् ॥**

क्रमेणोदाहरणानि । कर्तरि यथा---

याच्यमाने तु भूम्यादौ सज्जनेन्द्रो द्विजातये ।
प्रीत्या प्रतिशृणोत्येतं, ददाति च विशेषतः ॥

अत्र भूम्यादियाचनक्रियायां द्विजातेः कर्तृत्वम्, तस्य प्रतिपूर्वकश्रुधातुयोगे 'प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता' ( १।४।४० ) इति सम्प्रदानत्वम् । एवम् आङ्पूर्वश्रुधातुयोगेऽनुप्रतिपूर्वगृधातुयोगेऽपि बोध्यम् । कर्मणि यथा—

सज्जनेन्द्रो महाराजः सौवर्णेनातिमञ्जुना ।
पशुना रुद्रमयजदेकलिङ्गं सुभक्तितः ॥

अत्र पशुं रुद्रायाऽयजदित्यत्र 'कर्मणः करणसंज्ञा सम्प्रदानस्य च कर्मसंज्ञा वक्तव्या' इति वार्तिकेन पशोः कर्मणः करणत्वं, रुद्रस्य सम्प्रदानस्य कर्मत्वम् । पशुर्नन्दी, अयजत् अददादित्यर्थः । करणे यथा -

कार्तिके बलिराज्यस्य दिवसेष्वेव पञ्चसु ।
सज्जनेन्द्रः क्षमाजानिरक्षान् दीव्यति धर्मतः ॥

अत्र दिवधातुयोगेऽक्षैरिति करणस्य 'दिवः कर्म च' ( १।४।४३ ) इति कर्मसंज्ञा । सम्प्रदानत्वं यथा—

यः शताय परिक्रीतः कालेऽतीते व्रजन् पुनः ।
स्थितये प्रार्थ्यते दासः सज्जनेन्द्रस्य वैरिणा ॥

अत्र दासस्य नियतकालस्वीकृते दास्ये वेतनरूपस्य शतस्य करणस्य 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' ( १।४।४४ ) इति सम्प्रदानत्वम । सम्प्रदाने तु 'पशुना रुद्रम्' इत्युदाहृतमेव । अन्यदपि यथा--

धर्माधिकरणे न्यायकर्ता सज्जनभूपतेः ।
अभिक्रुध्यति वै क्रूरं तद्दौर्जन्यपरीक्षया ॥

अत्र सोपसर्गक्रुधधातुयोगे 'क्रूरम्' इति सम्प्रदानस्य 'क्रुधद्रुहोरुपसृष्टयोः कर्म' ( १।४।३८ ) इति कर्मत्वम् । अधिकरणे यथा—

अधितिष्ठत्युदयपुरं सन्मार्गं चाप्याभिनिविशते ।
संसदमुपवसति स्वां सज्जनसिंहोऽतिविततयशाः ॥

अत्र अधिपूर्वस्थाधातुयोगे 'उदयपुरम्' इति 'अधिशीङ्स्थासां कर्म' ( १।४।४६ ) इति, अभिनिपूर्वविशधातोर्योगे 'सन्मार्गम्' इति 'अभिनिविशश्च' ( १।४।४७ ) इति, उपपूर्ववसधातुयोगे 'संसदम्' इति 'उपान्वध्याङ्वसः' ( १।४।४८ ) इत्यधिकरणे कर्मत्वम् । इति कारके कारकान्तरम् ।

अथ विभक्तयः ।

**अभावेऽर्थविशेषस्योत्सर्गतः प्रथमा भवेत् ।**
**एवमेवैकवचनं क्रियास्ति भवतीति च ॥**
**सा प्रातिपदिकार्थेऽपि संख्यामात्रे तथैव च ।**
**लिङ्गमात्रे मानमात्रे तथा सम्बोधनेऽपि च ॥**

यथा—

सज्जनसिंह ! तवोच्चैरुद्योगः श्रीयशश्चास्ति ।
न्याय्यं सर्वं बहवो भारा हि व्रीहयोऽर्थिसान्नित्यम् ॥

अत्र 'सज्जनसिंह' इति सम्बोधने 'सम्बोधने च' ( २।३।४७ ) इति प्रथमा । 'उच्चैः' इत्यलिङ्गत्वात् 'उद्योगः श्रीयशश्च' इति नियतलिङ्गत्वात् प्रातिपदिकार्थे, 'न्याय्यं सर्वम्' इति अनियतलिङ्गत्वाल्लिङ्गमात्रे, 'बहवः' इति संख्यामात्रे, 'भाराः' इति मानमात्रे 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' ( २।३।४६ ) इति प्रथमा । इति प्रथमा ।

अथ द्वितीया ।

**उपर्युपर्यध्यधि चाधोऽधो धिक् परितोऽभितः ।**
**समयोभयतो हा च निकषा सर्वतः प्रति ।**
**अन्तरेणान्तरा चैषां योगे स्यात्तु द्वितीयिका ॥**

विस्तरभयादेषां दिङ्मात्रमुदाह्रियते । यथा--

तुलितं पूर्णचन्द्रेणोपर्युपर्यातपत्रकम् ।
भद्रासनमधोऽधश्चोभयतः श्वेतचामरे ॥
अभितस्तु सभास्ताराः समया विदुषां गणः ।
सज्जनेन्द्रं महीपालं विराजन्ते सदस्यलम् ॥

युग्मम् । अत्र उपर्युपर्यधोऽध उभयतश्च योगे --

'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाऽऽम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते' ॥

इति 'सज्जनेन्द्रम्' इति द्वितीया । एवम् अभितः समया च योगे 'अभितःपरितःसमयानिकषाहाप्रतियोगेऽपि' इति द्वितीया । अन्तरादियोगे यथा—

सज्जनेन्द्रमन्तरा न सौख्यमन्यतो लभे
पण्डितैरतो नृपः स वीक्षणीय उद्यमात् ।
मेदपाटमेत्य यो न तं प्रभुं प्रवीक्षते
वञ्चितं सुखेन तं धिगस्तु सर्वथा खलु ॥

अत्र अन्तरायोगे 'सज्जनेन्द्रम्' इति 'अन्तरान्तरेणयुक्ते' (२।३।४) इति द्वितीया । एवं धिग्योगेऽपि 'उभसर्वतसोः' इति द्वितीया । एवमन्येषामपि योगे द्वितीया बोध्या ।

**लक्षणार्थतृतीयार्थहीनार्थद्योतकस्त्वनुः ।**
**उपो हीनाधिकार्थश्च, प्रतिपर्यनवस्त्वथ ॥**
**भागवीप्सातत्त्वकथालक्षणार्था, अभिस्तथा ।**
**भागवर्जं तदर्थश्च, पूजातिक्रमणेऽप्यतिः ॥**

**अनर्थकावभिपरी पूजार्थद्योतकश्च सुः ।**
**गर्हासम्भावनाकामचारानुज्ञासमुच्चये ॥**
**अपिरेते च सम्प्रोक्ताः कर्मप्रवचनीयकाः ।**
**एषां योगे द्वितीया स्यात् कालमार्गार्थयोरपि ।**
**आत्यन्तिके च संयोगे द्वितीया परिकीर्तिता ॥**

कर्मप्रवचनीयसंज्ञकयोगे यथा—

भाति हृष्टं सज्जनेन्द्रमनूदयपुरं महत् ।
अनूदयपुरं सेनाऽवसिता तस्य वर्तते(१) ॥

अत्र उपलक्षणार्थत्वादनोः 'अनुर्लक्षणे' ( १।४।८४ ) इति कर्मप्रवचनीयसंज्ञा, तद्योगे 'सज्जनेन्द्रम्' इति 'कर्मप्रवचनीययुक्ते द्वितीया' ( २।३।८ ) इति द्वितीया । एवम् अनोः तृतीयार्थकत्वात् 'तृतीयार्थे' ( १।४।८५ ) इति सा संज्ञा । पूर्वत्र हेतुभूतसज्जनेन्द्रोपलक्षितं सहर्षमुदयपुरमित्यर्थः। उत्तरत्र उदयपुरेण सह सम्बद्धा सेनेत्यर्थः । यथा च—

अनु सज्जनभूपालं न भान्ति च सभासदः ।
सज्जनेशः सत्करोति गुणिनं गुणिनं प्रति ॥

अत्र अनोर्हीनार्थकत्वात् 'हीने' ( १।४।८६ ) इति सा संज्ञा । सज्जनेन्द्रहीनाः सभासद इत्यर्थः ।एवं 'गुणिनं गुणिनम्' इति वीप्सायां 'प्रति' इत्यस्य 'लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' ( १।४।९० ) इति सा संज्ञा । एवम् अभ्यादियोगे बोध्या । अत्यन्तसंयोगे यथा—

शतवर्षं तु कल्याणी भूयात् सज्जनभूपतिः ।
राज्यं चायुतगव्यूति तस्य भूयादकण्टकम् ॥

अत्र कालार्थकस्य शतवर्षस्य कल्याणिना सहात्यन्तसंयुक्तत्वात्, अध्वार्थाया अयुतगव्यूते राज्येन सहात्यन्तसंयुक्तत्वात् उभयत्र 'कालाध्वनोरत्यन्तसंयोगे' ( २।३।५ ) इति द्वितीया । इति द्वितीया ।

---

(१) वर्तते सदा ।

अथ तृतीया ।

**द्योत्यायां तु फलप्राप्तौ कालमार्गार्थयोः खलु ।**
**आत्यन्तिके च संयोगे तृतीया भवति स्फुटम् ॥**

यथा —

उत्तमर्णेन संलब्धं निह्नवे भावितं वसु ।
व्यवहारे मुहूर्तेन कृते सज्जनजिष्णुना ॥

अत्र कालार्थकस्य मुहूर्तस्य व्यवहारेण सहात्यन्तसंयुक्तत्वात् 'अपवर्गे तृतीया' ( २।३।६। ) इति तृतीया । वसुदापनरूपा व्यवहारस्य फलप्राप्तिः ।

**विकृताङ्गेन येनैव लक्ष्यतेऽङ्गी विकारवान् ।**
**ततस्तृतीया भवति सहार्थेन तथा युजि ॥**

यथा—

रणे सन्ताडितः कश्चिद्योद्धा सज्जनभूपतेः ।
सख्या सह वने शत्रुरक्ष्णा काणः पलायितः ॥

अत्र स्फुटनेन विकृतेनाक्षिरूपेणाङ्गेन काणत्वरूपविकारवानङ्गी शत्रुर्लक्ष्यत इति तदङ्गवाचकात 'येनाङ्गविकारः' ( २।३।२० ) इति तृतीया । एवं सख्युः सहयोगेन 'सहयुक्तेऽप्रधाने' ( २।३।१९ ) इति तृतीया ।

**कञ्चित्प्रकारं प्राप्तस्य लक्षणे च तृतीयिका ।**
**हेत्वर्थे च तथैव स्यात् प्रकृत्यादिभ्य एव च ॥**

यथा—

दूरतः सज्जनेशानं 'राजायं छत्रचामरैः' ।
निश्चित्यैवं जगादोच्चैर्दृष्टः पुण्येन वै मया ॥

कश्चिदिति शेषः । अत्र सज्जनेन्द्रगतराजत्वस्य छत्रचामराण्युपलक्षकाणीति तेषाम् 'इत्थंभूतलक्षणे' ( २।३।२१ ) इति तृतीया ।

यथा च—

वैजवापायनो गोत्रेण प्रकृत्या च सुन्दरः ।
योऽस्ति, जीयाच्छतं वर्षं स सज्जनमहीपतिः ॥

अत्र गोत्रप्रकृतिशब्दयोः 'प्रकृत्यादिभ्य उपसंख्यानम्' इति तृतीया । इति तृतीया ।

अथ चतुर्थी ।

**तादर्थ्ये च चतुर्थी स्यात् क्लृपि सम्पद्यमानके ।**
**उत्पातेन ज्ञापिते च हितयोगेऽपि सा भवेत् ॥**

यथा—

वृत्तये सज्जनेट् (१) सेव्यः कल्पते च सुखाय सः ।
ततः स्वराज्यभङ्गाय वामाक्षि स्पन्दते रिपोः ॥

अत्र वृत्त्यर्थं सेव्य इत्यर्थे 'तादर्थ्ये चतुर्थी वाच्या' इति चतुर्थी । एवं क्लृपधातुयोगे सुखशब्दात् 'क्लृपि सम्पद्यमाने च' इति चतुर्थी । तथा वामाक्षिस्पन्दरूपोत्पातेन बोधिते राज्यभङ्गे 'उत्पातेन ज्ञापिते च' इति चतुर्थी । एवं हितयोगेऽपि बोध्या ।

**क्रियार्थोपपदस्यैवमप्रयुक्तस्य कर्मणि ।**
**क्रियार्थायां क्रियायां ये प्रत्ययाश्च तदन्ततः ॥**

यथा—

प्रवीरसैनिकैः साकमुत्साही सज्जनाधिपः ।
संयाति परराष्ट्रेषु धनेभ्यश्च जयाय च ॥

अत्र आहरणक्रियार्था या यानक्रिया सा अप्रयुक्तस्य तुमुन उपपदम्, तस्य कर्म धनानि, तेभ्यः 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (२।३।१४) इति चतुर्थी । धनान्याहर्तुं यातीत्यर्थः । तथा रिपुजयरूपाक्रियार्थायां यानक्रियायां विहिताच्प्रत्ययान्तजयशब्दात् 'तुमर्थाच्च भाववचनात्' ( २।३।१५ ) इति चतुर्थी । जेतुं यातीत्यर्थः ।

**नमःस्वस्तिस्वधास्वाहाऽलंवषड्योगतो भवेत् ।**
**मनधातोः प्राणिवर्जकर्मण्यपि तिरस्कृतौ ॥**

---

(१) सज्जनः ।

यथा—

कश्चित् सज्जनभूपतिभटेन 'न त्वां तृणाय मन्य' इति ।
उक्त'स्तुभ्यं नम' इत्यूचे भीत्यात्मरक्षायै ॥

अत्र अनादरोक्तौ मनधातोस्तृणस्य प्राणिवर्जकर्मत्वात् 'मन्यकर्मण्यनादरे विभाषाऽप्राणिषु' ( २।३।१७ ) इति चतुर्थी । एवं नमःशब्दयोगे 'तुभ्यम्' इति 'नमःस्वस्तिस्वाहास्वधाऽलंवषड्योगाच्च' (२।३।१६) इति चतुर्थी । एवं स्वस्त्यादियोगे बोध्या । इति चतुर्थी ।

अथ पञ्चमी ।

**ल्यब्लोपे चाधिकरणे कर्मण्यपि च पञ्चमी ।**

यथा—

कुतुकेन गिरेः शोभां सज्जनः पृथिवीपतिः ।
प्रासादादासनाच्चैव प्रेक्षतेऽनुगतैः सह ॥

अत्र आरुह्येति ल्यपः कर्म प्रासादस्तस्मात् , उपविश्येति ल्यपोऽधिकरणमासनं तस्माच्च 'ल्यब्लोपे कर्मण्यधिकरणे च' इति पञ्चमी । प्रासादमारुह्यासने उपविश्य प्रेक्षत इत्यर्थः ।

**यतः कालाध्वनिर्माणं पञ्चमी तत्र, तद्युजि ।**
**काले तु सप्तमी मार्गे प्रथमा सप्तमी तथा ॥**

यथा—

कश्चित् सज्जनभूपदर्शनकृते देशात् स्वकादाव्रजन्
नाऽपृच्छत् कतिदूरमित्यनुगतं, सोऽवोचदस्माद्वनात् ।
क्रोशाः षोडश पञ्च चोदयपुरं, श्रुत्वेति पुष्यं दिना-
दस्मात्पञ्चमके दिनेऽस्ति सुखतः प्राप्स्याम्यवादीदिति ॥

अत्र वनदिनाभ्यां कालमार्गयोः प्रवृत्तिरिति ततः पञ्चमी, तद्युक्ते मार्गबोधके 'क्रोशाः' इति प्रथमा, कालबोधकात्पञ्चमदिनात् सप्तमी । तथा च वार्तिकम्—'यतश्चाध्वकालनिर्माणं तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या' इति ।

**आराद्दतेऽन्यदिक्शब्दैरञ्चूत्तरपदैर्युजि ।**
**आजाहियुक्ते च तथा बहिःप्रभृतियोगतः ॥**

यथा—

अन्यो नृपः सज्जनभूमिपालान्मान्यो वदान्योऽपि न चास्ति भूमौ ।
ऋतेऽन्यदेशे न हि मेदपाटात् सरोवरान्तर्गतरम्यवेश्म ॥

अत्र अन्यशब्दयोगे सज्जनभूमिपालशब्दात् , ऋतेयोगे मेदपाट-शब्दात् 'अन्याराादितरर्ते दिक्शब्दाऽञ्चूत्तरपदाजाहियुक्ते' (२।३।२९) इति पञ्चमी । एवमन्येषां योगे बोध्या ।

**वर्जनेऽपपरी चैव मर्यादावचने तथाऽऽङ् ।**
**कर्मप्रवचनीयाख्यस्तद्योगे पञ्चमी भवेत् ॥**

यथा—

अप सज्जनभूपतेर्नृपा गुणविज्ञानविमूढचेतसः ।
विदुषामिह दैन्यसम्भवो भवति ह्यस्य किलाऽऽसमागमात् ॥

अत्र वर्जनार्थकर्मप्रवचनीयाऽपयोगे 'सज्जनभूपतेः' इति पञ्चमी । सज्जनभूपतिवर्जमित्यर्थः । 'अपपरी वर्जने' ( १।४।८८ ) इति कर्म-प्रवचनीयसंज्ञा । तथा मर्यादार्थकोक्तसंज्ञकाऽऽङ्योगे 'समागमात्' इति पञ्चमी । समागमपर्यन्तमित्यर्थः । 'आङ्मर्यादावचने' ( १।४।८९ ) इति सा संज्ञा । उभयत्र 'पञ्चम्यपाङ्परिभिः' (२।३।१०) इति पञ्चमी ।

**प्रतिदाने प्रतिनिधौ प्रतिस्तत्संज्ञको भवेत् ।**

यथा—

मेदपाटाख्यदेशस्य राज्यशासनकर्मणि ।
सज्जनेन्द्रो महीपाल एकलिङ्गात्प्रति ध्रुवम् ॥

अत्र प्रतिनिध्यर्थकोक्तसंज्ञकप्रतियोगे 'एकलिङ्गात्' इति पञ्चमी । सज्जनेन्द्र एकलिङ्गस्य प्रतिनिधिरित्यर्थः । 'प्रतिः प्रतिनिधिप्रतिदानयोः' ( १।४।९२ ) इति सा संज्ञा । 'प्रतिनिधिप्रतिदाने च यस्मात्' ( २।३। ११ ) इति पञ्चमी ।

**गुणेऽकर्तर्यृणे हेतौ पृथङ्नानाविनायुजि ।**

यथा—

उत्तमर्णेनाभियुक्तः सज्जनेन्द्रस्य संसदि ।
जाड्याद्बद्धः शताद्बद्धोऽधमर्णो द्रव्यलिह्वे ॥

अत्र हेतुभूतगुणवाचकजाड्यशब्दात् 'विभाषा गुणेऽस्त्रियाम्' ( २।३।२५ ) इति पञ्चमी । पक्षे तृतीयापि । एवं हेतुभूतशतर्णात् 'अकर्तर्यृणे पञ्चमी' ( २।३।२४ ) इति पञ्चमी । यथा च—

विना सज्जनभूपालाद् गुणश्रमपरीक्षणम् ।
कर्तुं समर्थो नो राजा, तस्मात्सेव्यः स एव हि ॥

अत्र विनायोगे 'सज्जनभूपालात्' इति 'पृथग्विनानानाभिस्तृतीयाऽन्यतरस्याम्' ( २।३।३२ ) इति पञ्चमी । पक्षे द्वितीया तृतीया च ।

**तथा दूरान्तिकार्थेभ्यः पञ्चमी प्रविधीयते ।**

यथा—

उदयपुरे रमणीयो राजकुलस्यान्तिकात् सुविस्तीर्णः ।
दीर्घश्चातिगभीरः कासारः सागरस्पर्धी ॥

अत्र 'अन्तिकात्' इति 'दूरान्तिकार्थेभ्यो द्वितीया च' ( २।३।३५ ) इति पञ्चमी । पक्षे द्वितीयातृतीये । इति पञ्चमी ।

अथ षष्ठी ।

**षष्ठी स्वस्वामिभावादिसम्बन्धे खलु जायते ।**
**तथा हेतुप्रयोगे च हेतौ द्योत्ये च वा भवेत् ॥**

यथा—

मेदपाटस्य राजानं सज्जनेन्द्रं गुणाकरम् ।
गुणिनोऽनेकदेशस्था वृत्तेर्हेतोः श्रयन्ति हि ॥

अत्र मेदपाटसज्जनेन्द्रयोः स्वस्वामिभावसम्बन्धे 'मेदपाटस्य' इति 'षष्ठी शेषे' ( २।३।५० ) इति षष्ठी । एवं 'वृत्तेर्हेतोः' इति 'षष्ठी हेतुप्रयोगे' ( २।३।२६ ) इति षष्ठी ।

**हेतोश्च सर्वनाम्नश्च प्रयोगेऽपि भवेदियम् ।**

यथा—

कस्य हेतोर्मेदपाटे भवन्तः प्रव्रजन्ति हि ।
इति पृष्टा द्विजाः प्राहुर्दानास्ते सज्जनाधिपः ॥

अत्र 'कस्य' इति सर्वनाम्नो हेतोश्च प्रयोगे 'सर्वनाम्नस्तृतीया च' ( २।३।२७ ) इति षष्ठी । तृतीयाप्यत्र ।

**अतसर्थप्रत्ययेन युजि स्यादेनबन्ततः ॥**

यथा—

पुरः सज्जनभूपस्य स्वगुणान् गुणिनो जनाः ।
सावधाना दर्शयन्ति गुणज्ञत्वान्महीपतेः ॥

अत्र 'पुरः' इत्यतसर्थप्रत्यययोगे 'सज्जनभूपस्य' इति 'षष्ठ्यतसर्थप्रत्ययेन' ( २।३।३० ) इति षष्ठी । यथा च—

दक्षिणेनोत्तरेणापि पूर्वेणाप्यपरेण च ।
सज्जनेन्द्रपुरस्यास्ति प्राकारो दृढभित्तिकः ॥

अत्र 'दक्षिणेन' इत्याद्येनप्प्रत्ययान्तयोगे 'सज्जनेन्द्रपुरस्य' इति 'एनपा द्वितीया' ( २।३।३१ ) इति षष्ठी । द्वितीयापि ।

**अधीगर्थदयेशां च योगे दूरान्तिकार्थयोः ।**

यथा—

निजकुलाचरितस्य हि कर्मणः स्मरति नित्यमपूर्वविधावपि ।
न हि विरोधि भवेत् किमु पूर्वजैरिति भिया किल सज्जनपार्थिवः॥

अत्र 'स्मरति' इत्यस्य अधीगर्थत्वात् 'निजकुलाचरितस्य' इति 'अधीगर्थदयेशां कर्मणि' ( २।३।५२ ) इति षष्ठी । एवं दूरान्तिकार्थयोगे बोध्या ।

**गुणाधाने कृञः कर्मण्यपि षष्ठी विधीयते ।**

यथा—

सज्जनेन्द्राद्बहु धनं प्राप्य हृष्टा द्विजातयः ।
अन्नानां व्यञ्जनानां चोपस्कुर्वन्ति दिने दिने ॥

अत्र 'उपस्कुर्वन्ति' इति कृधातोः कर्मभ्योऽन्नव्यञ्जनेभ्यः 'कृञः

प्रतियत्ने' ( २।३।५३ ) इति षष्ठी । वेसवारादिभि(१)रन्नव्यञ्जनेषु गुणाधानं कुर्वन्तीत्यर्थः ।

**रोगकर्तृकपीडाया अज्वरायाश्च कर्मणि ।**

यथा—

अरण्येषु जलादीनां विपर्यासादिना रिपोः ।
रुजा रोगस्य कुरुते सज्जनेन्द्रापराधिनः ॥

अत्र रोगकर्तृकरुजायाः कर्म रिपुस्तस्मात् 'रुजार्थानां भाववचनानामज्वरेः' ( २।३।५४ ) इति षष्ठी । ज्वरसन्तापयोस्तु कर्मणि न भवति ।

**नाथधातोराशिषि च कर्मण्यपि तथा भवेत् ॥**

यथा—

सत्कृता ब्राह्मणाः सर्वे सज्जनेन्द्रस्य भूपतेः ।
वाक्यैः शुभाशंसिभिश्च नाथन्ते हि मुहुर्मुहुः ॥

अत्र आशीर्वादार्थकनाथधातोः कर्मणः सज्जनेन्द्रात् 'आशिषि नाथः' ( २।३।५५ ) इति षष्ठी ।

**हिंसायां निप्रहणनाटक्राथपिषां तथा ।**
**जासेश्च कर्मण्यपि हि समर्थव्यवहृञ्पणोः ॥**

यथा—

चौराणां सज्जनेन्द्रस्य पुरुषः प्रणिहन्त्यलम् ।
अन्विष्य सततं राष्ट्रे लुण्ठकानां पिनष्ट्यपि ॥

अत्र 'चौराणां लुण्ठकानाम्' इति प्रणिहन्पिषधात्वोः कर्मत्वात् 'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' ( २।३।५६ ) इति षष्ठी ।

यथा च—

सज्जनसिंहस्य पुरे स्वविषयदेशान्तरस्य कोटीनाम् ।
क्रयविक्रयेण वृद्ध्या धनिनो हि व्यवहरन्ति सत्येन ॥

---

( १ ) हिङ्ग्वार्द्रमरिचं जीरं हरिद्रां धान्यकं तथा ।
क्रमेण द्विगुणं सर्वं वेसवारमिमं जगुः ॥

अत्र व्यवहृधातोः कर्मभ्यः कोटिभ्यः 'व्यवहृपणोः समर्थयोः' ( २।३।५७ ) इति षष्ठी ।

**तथा तदर्थस्य दिवः सोपसर्गस्य वा भवेत् ।**

शुद्धस्य सोपसर्गस्य चोदाहरणं 'व्यवहृपणोः' इतिवद् बोध्यम् ।

**देवतासम्प्रदानार्थधातोः प्रेष्यब्रुवोरपि ॥**

यथा—

सज्जनेन्द्राश्रिता विप्रा यज्ञेष्वेवं पठन्ति हि ।
वपाया मेदसः प्रेष्य च्छागस्य हविषोऽग्नये ॥

अत्र अग्निसम्प्रदानकार्थप्रेषधातोः कर्मणोर्हविर्वाचकवपामेदसोः 'प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने' (२।३।६१) इति षष्ठी । एवं ब्रूधातोरपि बोध्यम् ।

**कृत्वोऽर्थानां प्रयोगे च कालाधिकरणे भवेत् ।**

यथा—

अह्नस्त्रिकृत्वः सन्ध्यां च द्विकृत्वो देवदर्शनम् ।
एककृत्वस्तु शयनं सज्जनेन्द्रः करोति हि ॥

अत्र 'त्रिकृत्वः द्विकृत्वः एककृत्वः' इति कृत्वसुजन्तानां प्रयोगे 'अह्नः' इत्याधारस्य 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' ( २।३।६४ ) इति षष्ठी । त्रिकृत्वस्त्रिवारम् ।

**कृद्योगे कर्तरि तथा कर्मणि प्रागुदाहृता ।**
**कर्तृकर्मोभयप्राप्तौ कर्मण्येव विधीयते ॥**

'कर्तृकर्मणोः कृति' ( २।३।६५ ) 'कृत्यानां कर्तरि वा' ( २।३।७१ ) इत्येताभ्यामित्यर्थः ।

**लोकाव्ययानां निष्ठायाः खलर्थानां तृनोऽपि च ।**
**प्रयोगे नैव षष्ठी स्यादुके कामुकतो भवेत् ।**
**द्विषः शतुर्वा भवति शेषे सर्वेभ्य एव च ॥**

एषां विभक्त्यन्तरोदाहरणान्यूह्यानि । शेषे षष्ठी तूदाह्रियते । यथा—

राज्यस्य कुर्वन्नहितस्य जिष्णुर्दातुं सुखानां हतवान् खलानाम् ।
नीतेरधीयन् सुनयस्य कर्ता जयत्यहो ! सज्जनभूमिपालः ॥

अत्र 'कुर्वन्' इति लादेशः, 'जिष्णुः' इति उः, 'दातुम्' इत्यव्ययम्, 'हतवान्' इति निष्ठा, 'अधीयन्' इति शतृ, 'कर्ता' इति तृन्। एषां प्रयोगे राज्यहितसुखखलनीतिसुनयशब्देभ्यः कर्मभ्यः शेषत्वाविवक्षया 'षष्ठी शेषे' ( २।३।५० ) इति षष्ठी । एवं प्रागुदाहृतासु शेषषष्ठीषु शेषत्वाविवक्षायां कर्मादिविभक्तयो भवन्त्येवेति बोध्यम् ।

**वर्तमानार्थकक्तस्य तथाऽऽधारार्थकस्य च ।**
**योगे षष्ठी भवत्येव तथा तुल्यार्थकैः सह ॥**

यथा--

सज्जनेन्द्रस्य सदृशो नास्ति भूमौ परो नृपः ।
अतोऽयं सर्वभूपानां मतो बुद्धश्च पूजितः ॥

अत्र 'सदृशः' इति तुल्यार्थकयोगे 'सज्जनेन्द्रस्य' इति 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' ( २।३।७२ ) इति षष्ठी । 'अतुलोपमाभ्याम्' इत्युक्तेस्तुलोपमाशब्दयोगे न भवति । पक्षे तृतीया । एवं 'मतो बुद्धः पूजितः' इति वर्तमानार्थकक्तयोगे 'सर्वभूपानाम्' इति 'क्तस्य च वर्तमाने' ( २।३।६७ ) इति षष्ठी । एवम् आधारार्थकेऽपि बोध्या ।

**आयुष्यकुशलैश्चैव हितभद्रसुखार्थकैः ।**
**योगे षष्ठी भवेदाशीर्वादवाक्ये विकल्पतः ॥**

यथा--

'आयुष्यं कुशलं शं भद्रं चार्थो हितं भूयात् ।
सज्जनसिंहस्य सदा' विप्रा एवं वदन्ति मुहुः ॥

अत्र आयुष्यादिप्रयोगे 'भूयात्' इत्याशीर्वादे 'सज्जनसिंहस्य' इति 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' (२।३।७३) इति षष्ठी । पक्षे चतुर्थी । इति षष्ठी ।

## अथ सप्तमी ।

**साध्वसाधुप्रयोगे चेन्निविषयक्तस्य कर्मणि ।**
**निमित्तात् कर्मयोगे च सप्तमी प्रविधीयते ॥**

यथा--

नीतावधीती निकृतेष्वसाधुः साधुर्गुरौ चर्मणि यश्च हन्ति ।
व्याघ्रं सदा, सज्जनभूमिपालो जीयाच्चिरञ्जीवितवानरोगः ॥

अत्र 'अधीती' इति इन्विषयस्य क्तस्य योगे 'नीतौ' इति 'क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्' इति सप्तमी । एवं 'निकृतेषु गुरौ' इति च 'साध्वसाधुप्रयोगे च' इति सप्तमी । तथा 'चर्मणि' इति 'निमित्तात्कर्मयोगे' इति सप्तमी ।

**क्रियान्तरं यत्क्रियया लक्ष्यते तत्र सप्तमी ।**

यथा--

युध्यत्सु (१) सैन्येषु च सज्जनप्रभुः शीघ्रं पुरोभूय निहन्ति वैरिणः ।
पलायमानेष्वपि तेषु वेगतो गृह्णाति तांस्तुल्यपराक्रमः स्वयम् ॥

अत्र सैन्यसम्बन्धियुद्धक्रियया एवं तच्छब्दवाच्यवैरिसम्बन्धिपलायनक्रियया हननग्रहणक्रिया लक्ष्यते इति सैन्यतच्छब्दाभ्यां 'यस्य च भावेन भावलक्षणम्' (२।३।३७) इति सप्तमी । युध्यत्सु सत्सु पलायमानेषु सत्सु इत्यर्थः । अत्र अनादरे वाच्ये षष्ठ्यपि 'षष्ठी चानादरे'(२।३।३८) इति भवतीति बोध्यम् ।

**स्वामीश्वराधिपतिभिस्तथा दायादसाक्षिभिः ।**
**प्रसूतप्रतिभूभिश्च योगे भवति सप्तमी ॥**

यथा—

भूमिपालेष्वधिपतिः सज्जनेन्द्रोऽस्ति भूतले ।
बभूवुरन्ये राजानो यद्वशात् तिलकाङ्किताः ॥

अत्र अधिपतियोगे 'भूमिपालेषु' इति 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' ( २।३।९३ ) इति सप्तमी । पक्षे षष्ठ्यपि ।

**आयुक्तकुशलाभ्यां चासेवायां सप्तमी भवेत् ॥**

यथा—

सज्जनेन्द्रो महीपाल आयुक्तो विप्रपूजने ।
बाणनाथस्य पूजायां कुशलो नित्यमादरात् ॥

अत्र आसेवार्थकाऽऽयुक्तकुशलशब्दाभ्यां योगे विप्रपूजनबाणनाथ-

---

(१) युधमिच्छत्सु इत्यर्थे क्यजन्ताच्छतृप्रत्ययः ।

पूजाशब्दाभ्याम् 'आयुक्तकुशलाभ्यां चासेवायाम्' (२।३।४३) इति सप्तमी ।

**जातिक्रियागुणैर्नाम्ना समुदायात्पृथक्कृतिः ।**

**यतस्ततः सप्तमी स्यात् षष्ठी चापि भवेदिति ॥**

यथा—

नरेषु ब्राह्मणं श्रेष्ठं ब्राह्मणेषु च पण्डितम् ।

पण्डितेषु क्रियावन्तं मनुते सज्जनाधिपः ॥

अत्र ब्राह्मणपण्डितक्रियावतां जातिगुणक्रियाभिर्नरब्राह्मणपण्डितेभ्यः पृथक्करणात् नरब्राह्मणपण्डितेभ्यो 'यतश्च निर्धारणम' ( २।३।४१ ) इति सप्तमी ।

**अर्चायां साधुनिपुणाभ्यां योगे सप्तमी भवेत् ।**

**प्रसितोत्सुकशब्दाभ्यां लुप्तप्रत्ययभादपि ॥**

यथा—

स्वगुरुषु निपुणोऽसावुत्सुकश्चैकलिङ्गे

शरदि भगवतीं संस्थाप्य मूलेऽर्चति स्वे ।

अधिगृहमतिभक्त्या तोषयित्वोपचारैः(१)

श्रवण इति करोति क्ष्मापतिः सज्जनेन्द्रः ॥

अत्र पूजनार्थकनिपुणशब्दयोगे 'गुरुषु' इति 'साधुनिपुणाभ्या मर्चायां सप्तम्यप्रतेः' ( २।३।४३ ) इति सप्तमी । 'अप्रतेः' इति 'अप्रत्यादिभ्य इति वक्तव्यम्' इति प्रतिपर्यनुप्रयोगे न भवति । एवम् उत्सुकशब्दयोगे 'एकलिङ्गे' इति 'प्रसितोत्सुकाभ्यां तृतीया च' (२।३।४४) इति सप्तमी । अत्र तृतीयापि । तथा 'मूले श्रवणे' इति तद्युक्तकालवाचकप्रत्ययलुप्तत्वात् 'नक्षत्रे च लुपि' (२।३।४५) इति सप्तमी ।

**शक्तिद्वयस्य मध्ये यौ कालमार्गौ ततस्तु सा ।**

यथा—

देवित्वा सज्जनेन्द्रोऽद्य द्व्यहे देविष्यति ध्रुवम् ।

उन्नतस्थस्तथा क्रोशे लक्ष्यं विध्येच्छरैरलम् ॥

---

(१) सदसि बहुविधाभिस्तोषयित्वातिभक्त्या ।

अत्र 'द्व्यहे' इति कालस्य कर्तृशक्तिद्वयमध्यगतत्वात्, 'क्रोशे' इति मार्गस्य कर्तृकर्मशक्तिद्वयमध्यगतत्वात् 'सप्तमीपञ्चम्यौ कारकमध्ये' (२।३।७) इति सप्तमी । पञ्चम्यपि ।

**ऐश्वर्येऽधौ कृञि तु वा कर्मप्रवचनीयता ।**

यथा—

अधिक्षितौ सज्जनोऽधिसज्जने क्षितिरस्त्यलम् ।
तस्मात्सर्वे समीहन्ते मामत्राऽधिकरिष्यति ॥

अत्र स्वस्वामिभावसम्बन्धे 'अधि' इत्यस्य 'अधिरीश्वरे' (१।४।९७) इति कर्मप्रवचनीयतया तद्युक्तयोः क्षितिसज्जनयोः पर्यायेण 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (२।३।९) इति सप्तमी । एवम् 'अधिकरिष्यति' इत्यत्र 'विभाषा कृञि' (१।४।९८) । इति तत्संज्ञकस्य अधिपूर्वकृञो योगे 'अत्र' इति 'यस्मादधिकम्' (२।३।९) इति सप्तमी ।

**यतोऽधिक उपे चैव योगे चैवाधिकेन च ।**
**सप्तमी तु प्रवक्तव्या कारकस्यैष सङ्ग्रहः ॥**

यथा—

उपवाचि गुणास्तस्य तस्मिन्नास्त्यधिकं किमु ।
अतो वाङ्मयमात्रेऽस्ति स एवोदाहृतिः क्षितौ ॥

अत्र 'उप' इति 'उपोऽधिके च' (१।४।८७) इति तत्संज्ञकयोगे 'वाचि' इति 'यस्मादधिकम्' (२।३।९) इति सप्तमी । वाचोऽधिका गुणा इत्यर्थः । एवम् अधिकशब्दयोगे 'तस्मिन्' इति 'तदस्मिन्नधिकमिति' (५।२।४५) इति निर्देशात् सप्तमी । 'यस्मादधिकम्' (२।३।९) इति निर्देशाच्च पञ्चम्यपि ।

सज्जनेन्द्रयशोगन्धप्रसारणकरं परम् ।
कारकं नाम कुसुमं प्रथमं फुल्लतामयात् ॥

**इति श्रीधर्माधिकारिकृष्णपण्डितविरचिते सज्जनेन्द्रप्रयोगकल्पद्रुमे कारककुसुमं प्रथमम् ॥**

## अथ समासकुसुमम् ।

**समासो द्विविधः प्रोक्तः सामान्यश्च विशेषकः ।**
**सामान्यः केवलं ज्ञेयः सुबन्तेन सुबन्ततः ॥**

सामान्यो यथा—

ज्ञाने सुकीर्तौ सुकृते प्रतापे माने च धैर्ये विनये नये च ।
क्षोणीतले सज्जनभूपतुल्यो न भूतपूर्वो न च दृष्टपूर्वः ॥

अत्र 'पूर्वं भूतो भूतपूर्वः पूर्वं दृष्टो दृष्टपूर्वः' इति सामान्यतः 'सह सुपा' ( २।१।४ ) इति समासः ।

**विशेषस्तु चतुर्धा स्यादेकस्तत्पुरुषः स्मृतः ।**
**द्वितीयश्च बहुव्रीहिर्द्वन्द्वश्चापि तृतीयकः ॥**
**चतुर्थश्चाऽव्ययीभाव इति भेदचतुष्टयम् ।**
**द्विधा तत्पुरुषो बोध्यः सामान्योऽथ विशेषकः ।**
**सामान्यस्त्वष्टधा प्रोक्तो विभक्तीनां, तथा नञः ॥**

विभक्तीनां सप्तानामित्यर्थः । तत्र प्रथमातत्पुरुषो यथा—

अपरोदयपुर आरात्सरोऽर्धनगरेऽस्ति सज्जनेशस्य ।
तुर्यसरस्यापन्नप्रकृष्टशोभानि भवनानि ॥

अत्र 'अपरमुदयपुरस्य अपरोदयपुरम्' इति 'पूर्वापराधरोत्तरमेकदेशिनैकाधिकरणे' ( २।२।१ ) इति समासः । उदयपुरस्यापरभाग इत्यर्थः । एवम् 'अर्धं नगरस्येत्यर्धनगरम्' इति 'अर्धं नपुंसकम्' (२।२।२) इति समासः । तथा 'तुर्यं सरसस्तुर्यसरः' इति 'द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्' ( २।२।३ ) इति समासः । एवम् 'आपन्नानि प्रकृष्टशोभाम् आपन्नप्रकृष्टशोभानि' इति 'प्राप्तापन्ने च द्वितीयया' (२।२।४) इति समासः । अयं च पूर्वपदार्थप्रधानोऽनित्योऽलुक् च । अस्य प्रथमातत्पुरुषत्वमिति प्राञ्चः । द्वितीयातत्पुरुषो यथा—

खट्वारूढयतिप्रभान् सुदमयन् शम्भुश्रितो भक्तितः
क्रीडोद्यानगमी स्वयंकृतमयं सत्सम्मतीकारयन् ।

न्यायं सामिकृतं स्वकीयपुरुषैः शीघ्रं परावर्तयन्
सावित्र्याश्च मुहूर्तचिन्तनपरः श्रीसज्जनो मोदते ॥

अत्र 'खट्वामारूढः खट्वारूढः' इति 'खट्वा क्षेपे' (२।१।२६) इति समासः। नित्यसमासोऽयम्, न हि वाक्येन निन्दा गम्यते । निन्दितान् दमयन्नित्यर्थः । 'शम्भुं श्रितः शम्भुश्रितः' इति 'द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः' (२।१।२४) इति समासः। 'क्रीडोद्यानं गमी क्रीडोद्यानगमी' इति 'गम्यादीनामुपसंख्यानम्' इति समासः। 'स्वयंकृतम्' इति 'स्वयं क्तेन' ( २।१।२५ ) इति समासः । 'सामिकृतम्' इति 'सामि' ( २।१।२७ ) इति समासः । 'मुहूर्तं चिन्तनपरो मुहूर्तचिन्तनपरः' इति 'अत्यन्तसंयोगे च' ( २।१।२९ ) इति समासः । तृतीयातत्पुरुषो यथा—

नीत्यर्था यस्य यान्ति, प्रचलदरिगणाः काकपेयाऽऽपगासू-
न्मज्जन्ति, स्वादुदध्योदनघृतवटकान् यद्भटा भक्षयन्ति ।
शम्भुत्रातश्च काले परनगरमभिप्रास्थितः सत्प्रताप-
भ्राजिष्णुः स क्षमायां जयति रघुसमः सज्जनो भूमहेन्द्रः ॥

अत्र 'नीत्या अर्थो नीत्यर्थः' इति, 'प्रतापेन भ्राजिष्णुः प्रतापभ्राजिष्णुः' इति च 'तृतीया तत्कृतार्थेन गुणवचनेन' ( २।१।३० ) इति समासः। एवं 'काकैः पेयाः काकपेयाः' इति 'कृत्यैरधिकार्थवचने' ( २।१।३३ ) इति समासः । 'दध्ना ओदनो दध्योदनः' इति 'अन्नेन व्यञ्जनम्' (२।१।३४) इति समासः । 'घृतेन वटका घृतवटकाः' इति 'भक्ष्येण मिश्रीकरणम्' ( २।१।३५ ) इति समासः । 'शम्भुना त्रातः शम्भुत्रातः' इति 'कर्तृकरणे कृता बहुलम्' (२।१।३२) इति समासः । 'रघुणा समो रघुसमः' इति 'पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः' ( २।१।३१ ) इति समासः । चतुर्थीतत्पुरुषो यथा—

विप्रार्थान्युत्तमान्नानि भूषाहेमानि चार्पयन् ।
सर्वदा गोहितं कुर्वन् सज्जनेन्द्रो विराजते ॥

अत्र 'विप्रेभ्य इमानि विप्रार्थानि' इति 'अर्थेन नित्यसमासो विशेष्यलिङ्गता चेति वक्तव्यम्' इति समासः । नित्यसमासोऽयम् । 'भूषायै हेमानि भूषाहेमानि' इति 'गवे हितं गोहितम्' इति च 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' (२।१।३६ ) इति समासः । पञ्चमीतत्पुरुषो यथा—

चोरभीतं सुखापेतं विप्रकृष्टात्समागतम् ।
शरण्यः सज्जनक्ष्माभृत् सत्वरं परिरक्षति ॥

अत्र 'चोराद्भीतश्चोरभीतः' इति 'पञ्चमी भयेन' ( २। ।३७ ) इति सूत्रे 'भयभीतभीतिभीभिरिति वाच्यम्' इति समासः । 'सुखादपेतः सुखापेतः' इति 'अपेतापोढमुक्तपतितापत्रस्तैरल्पशः' ( २। १।३८ ) इति समासः । विप्रकृष्टात्समागतः' इति 'स्तोकान्तिकदूरार्थकृच्छ्राणि क्तेन' ( २।१।३९ ) इति समासः । अयमलुक्समासः । षष्ठीतत्पुरुषो यथा—

मेदपाटेश्वरो भूपमहान् दारिद्र्यनाशनः ।
अमित्रोत्सादकः श्रीमान् सज्जनो वरिवर्त्यलम् ॥

अत्र 'मेदपाटस्येश्वरो मेदपाटेश्वरः' इति सम्बन्धमात्रे 'षष्ठी' ( २। २।८ इति समासः । 'भूपानां महत्तरो भूपमहान्' इति 'गुणात्तरेण तरलोपश्चेति वक्तव्यम्' इति समासः । 'दारिद्र्यस्य नाशनो दारिद्र्यनाशनः' इति 'कृद्योगा च षष्ठी समस्यत इति वाच्यम्' इति समासः । 'अमित्राणामुत्सादकोऽमित्रोत्सादकः' इति 'याजकादिभिश्च' (२।२।९) इति समासः । सप्तमीतत्पुरुषो यथा—

यो विश्राणनशौण्डो व्यवहृतिसिद्धो महेश्वराधीनः ।
तीर्थध्वाङ्क्षान् गेहेशूरान् स दलयति सज्जनाधीशः ॥

अत्र 'विश्राणने शौण्डो विश्राणनशौण्डः' इति 'सप्तमी शौण्डैः' ( २।१।४० ) इति समासः । 'व्यवहृतौ सिद्धः व्यवहृतिसिद्धः' इति 'सिद्धशुष्कपक्वबन्धैश्च' ( २।१।४१ ) इति समासः । 'महेश्वरे अधीनो

महेश्वराधीनः' इति 'सप्तमी शौण्डैः' ( २।१।४० ) इति सूत्रे अधिशब्दोऽत्र पठ्यते' इति समासः । 'अध्युत्तरपदात्' इति खः । खस्य ईनादेशः । 'तीर्थे ध्वाङ्क्ष इव तीर्थध्वाङ्क्षः' इति 'ध्वाङ्क्षेण क्षेपे' ( २।१।४२ ) इति समासः । लुब्ध इत्यर्थः । 'गेहेशूरः' इति 'पात्रेसमितादयश्च' ( २।१।४८ ) इति निपातितश्चाऽलुक्समासः ।

अथ नञ्तत्पुरुषः ।

तदभावस्तद्भिन्नतत्सदृशस्तद्विरुद्ध ईषदिति चत्वारो नञर्थाः । यथा——

यस्यापापं हृदये, श्रौतेष्वब्राह्मणो, मृगाक्षीषु ।
अप्रसितश्चाधर्मे त्यक्तेहः सज्जनः श्रीशः ॥

अत्र न पापमपापम्, पापस्याभावोऽपापमित्यर्थः । न ब्राह्मणोऽब्राह्मणः, ब्राह्मणभिन्नो ब्राह्मणसदृश इत्यर्थः । न प्रसितोऽप्रसितः, ईषत्प्रसित इत्यर्थः । न धर्मोऽधर्मः, धर्मविरुद्धोऽधर्म इत्यर्थः । 'नञ्' (२।२।६) इति समासः । अस्य तत्पुरुषत्वं प्राचामनुरोधेन । नव्यास्तु कर्मधारये पठन्ति ।

**विशेषो द्विविधः, कर्मधारयोऽथ द्विगुस्तथा ।**
**यः समानाधिकरणः स प्रोक्तः कर्मधारयः ॥**
**संख्यावाचकपूर्वो यः स द्विगुः परिकीर्तितः ।**
**प्रथमस्त्वष्टधा प्रोक्तो विशेषणपुरःपदः ॥**
**विशेषणोत्तरपदो विशेषणपदद्वयः ।**
**उपमानाद्यपदक उपमानोत्तरस्तथा ॥**
**वधारणापूर्वपदः कुगतिप्रादिकस्तथा ।**
**तथोपपदसंज्ञश्च कर्मधारय ईरितः ॥**

विशेषणपूर्वपदः कर्मधारयो यथा—

एकनाथो महाराज उर्वीतले वेदविप्रार्चकः पापशूद्रापहः ।
हर्षमाणीकृतस्वप्रजः किंप्रभुं भर्त्सयन् वीरराट् सज्जनक्ष्मापतिः ॥

अत्र 'एकश्चासौ नाथश्चैकनाथः' इति 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' ( २।१।४९ ) इति समासः । 'महांश्चासौ

राजा च महाराजः' इति 'सन्महत्परमोत्तमोत्कृष्टाः पूज्यमानैः' ( २।१। ६१ ) इति समासः। 'वेदप्रियो विप्रो वेदविप्रः' इति 'शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्' इति समासः। अयं मध्यमपदलोपी समास इत्युच्यते। 'पापश्चासौ शूद्रश्च पापशूद्रः' इति 'पापाणके कुत्सितैः' ( २।१।५४ ) इति समासः। 'अहर्षमाणा हर्षमाणाः कृता हर्षमाणीकृताः' इति 'श्रेण्यादयः कृतादिभिः' ( २।१। ५९ ) इति समासः। 'श्रेण्यादिषु च्व्यर्थवचनं कर्तव्यम्' इति अभूततद्भावः। 'कुत्सितः प्रभुः किंप्रभुः' इति 'किं क्षेपे' ( २।१। ६४ ) इति समासः। 'वीरश्चासौ राट् च वीरराट्' इति 'पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च' (२।१।५८) इति समासः। 'सज्जनश्चासौ क्षमापतिश्च सज्जनक्षमापतिः' इति 'विशेषणं विशेष्येण बहुलम्' ( २।२।५७ ) इति समासः। विशेषणोत्तरपदो यथा—

वैयाकणखसूचिं गोवृन्दारकमिवैति युवखलतिम्।
नर्मसु विहसत्यञ्चति गवोद्धमपि राति सज्जनाधीशः॥

अत्र 'वैयाकरणश्चासौ खसूचिश्च वैयाकरणखसूचिः' इति 'कुत्सितानि कुत्सनैः' ( २।१।५३ ) इति समासः। 'गौश्चासौ वृन्दारकश्च गोवृन्दारकः' इति 'वृन्दारकनागकुञ्जरैः पूज्यमानम्' (२।१।६२) इति समासः। 'युवा चासौ खलतिश्च युवखलतिः' इति 'युवा खलतिपलितवलिनजरतीभिः' ( २।१।६७ ) इति समासः। 'प्रशस्ता चासौ गौश्च गवोद्धः' इति 'प्रशंसावचनैश्च' ( २।१।६६ ) इति समासः। विशेषणोभयपदो यथा—

कीर्तिप्रतापैः सितरक्तवर्णं जगत् प्रकुर्वन् समयानुवर्ती।
श्रीसज्जनेशो धृतमुक्तशत्रुः कृताकृतं नैव करोति किञ्चित्॥

अत्र 'सितं च तद्रक्तं च सितरक्तम्' इति 'वर्णो वर्णेन' (२।१।६९) इति समासः। 'आदौ धृतः पश्चान्मुक्तो धृतमुक्तः' इति 'पूर्वकालैकसर्वजरत्पुराणनवकेवलाः समानाधिकरणेन' ( २।१।४९ ) इति समासः।

'कृतं च तदकृतं च कृताकृतम्' इति 'क्तेन नञ्विशिष्टेनानञ्'(२।१।६०) इति समासः । उपमानपूर्वपदो यथा—

श्रीमत्सज्जनसिंहः स्वस्य श्लाघ्यैर्गुणैरखिले ।
भूमण्डले वितनुते चन्द्रश्वेतं यशःप्रसरम् ॥

अत्र 'चन्द्र इव श्वेतश्चन्द्रश्वेतः' इति 'उपमानानि सामान्यवचनैः' ( २।१।५५ ) इति समासः । उपमानोत्तरपदो यथा—

युध्यमानेष्वनीकेषु सर्वेष्वेषु बहुष्वपि ।
सर्वतो विहरत्याजौ राजा सज्जनकेसरी ॥

अत्र 'सज्जनः केसरीव सज्जनकेसरी' इति 'उपमितं व्याघ्रादिभिः सामान्याप्रयोगे' ( २।१।५६ ) इति समासः । अवधारणापूर्वपदो यथा—

श्रीमान् सज्जनचन्द्रो विततसभाव्योममण्डले सततम् ।
विद्वत्कुलकुमुदवनं निजगुणकान्त्या विकासयति ॥

अत्र 'सज्जनसिंह एव चन्द्रः, सभैव व्योममण्डलम् , विद्वत्कुलमेव कुमुदवनम् , गुण एव कान्तिः' इति 'मयूरव्यंसकादयश्च' (२।१।७२) इति समासः । मयूरव्यंसकादिसमासान्तरं यथा—

राज्ये यतः खादतमोदताऽस्त्यलं श्रीसज्जनेन्द्रस्य न सन्त्यकिञ्चनाः ।
सर्वे च लोका अकुतोभयाः सदा राजान्तरं नो मनसापि यान्ति वै ॥

अत्र 'खादत मोदतेत्येवं सततं यत्राभिधीयते सा खादतमोदता' इति 'आख्यातमाख्यातेन क्रियासातत्ये' इति तदन्तर्गणसूत्रेण समासः । एवं 'नास्ति किञ्चन येषां तेऽकिञ्चनाः'इति 'नास्ति कुतो भयमेषां तेऽकुतोभयाः' इति 'अन्यो राजा राजान्तरम्' इति च तेनैव समासः । कुगतिप्रादिषु कुसमासो यथा —

सज्जनेन्द्रो महीपालः कदश्वं नाधिरोहति ।
न याति कापथेनापि न सहास्ते कुपूरुषैः ॥

अत्र 'कुत्सितोऽश्वः कदश्वः, कुत्सितः पन्थाः कापथः, कुत्सितः पूरुषः कुपूरुषः' इति 'कुगतिप्रादयः' ( २।२।१८ ) इति समासः ।

गतिसमासो यथा--

ये नित्यं प्रभुकार्यमुद्यततया कुर्वन्ति दुःखं तिर-
स्कृत्य स्वं च सुखं प्रलोभरहितास्तेभ्यो नृपः सज्जनः ।
ऊरीकृत्य ददाति वाञ्छितमलङ्कृत्य प्रवीभ्यो मुदा
साक्षात्कृत्य धनं धनं निजगृहेभ्यो जीविकाकृत्य च ॥

अत्र 'तिरःकृत्वा तिरस्कृत्य' इति 'तिरोऽन्तर्धौ' (१।४।७१) इति गतिसंज्ञा । 'ऊरीकृत्य' इति 'ऊर्यादिच्विडाचश्च' ( १।४।६१ ) इति गतिसंज्ञा । 'अलङ्कृत्य' इति 'भूषणेऽलम्' ( १।४।६४ ) इति गतिसंज्ञा । 'साक्षात्कृत्य' इति 'साक्षात्प्रभृतीनि च' ( १।४।७४ ) इति गतिसंज्ञा । 'जीविकामिव कृत्वा जीविकाकृत्य' इति 'जीविकोपनिषदावौपम्ये' ( १।४।७९ ) इति गतिसंज्ञा । सर्वत्र 'कुगतिप्रादयः' ( २।२।१८ ) इति समासः । प्रादिसमासो यथा--

प्रपुष्पसमये पिकोऽतिसहकार उद्भ्रान्तिमान्
अवात्मरवसञ्चयः परिरुतो निराक्रीडकः ।
भवन्त्युपवनस्थलान्यपि सुतप्तरूक्षाण्यतो
जहाति मृगयाविहारमपि सज्जनश्रीपतिः ॥

अत्र 'प्रगतः पुष्पसमयः प्रपुष्पसमयः' इति 'प्रादयो गताद्यर्थे प्रथमया' इति समासः । 'सहकारमतिक्रान्तोऽतिसहकारः' इति 'अत्यादयः क्रान्ताद्यर्थे द्वितीयया' इति समासः । 'अवक्रुष्टआत्मरवसञ्चयेनेत्यवात्मरवसञ्चयः' इति 'अवादयः क्रुष्टाद्यर्थे तृतीयया' इति समासः । आत्मरवः काकः । 'परिग्लानो रुताय परिरुतः' इति 'पर्यादयो ग्लानाद्यर्थे चतुर्थ्या' इति समासः । 'आक्रीडान्निष्क्रान्तो निराक्रीडकः' इति 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' इति समासः । उपपदसमासो यथा--

कूटकारं रिपुं दण्डोपघातं परिकल्प्य च ।
दुर्गोपरोधं कलयत्यसौ सज्जनभूपतिः ॥

अत्र 'कूटं करोति कूटकारः' इति 'उपपदमतिङ्' ( २।२।१९ )

इति समासः । 'दण्डेनोपघातं दण्डोपघातम्' इति 'दुर्गे उपरोधं दुर्गोपरोधम्' इति च 'तृतीयाप्रभृतीन्यन्यतरस्याम्' ( २।२।२१ ) इति समासः । द्विगुर्यथा—

श्रीसज्जनो युद्धपटुत्वहेतोः शताश्वमाराद्युगपत् प्रधावयन् ।
पट्टादिकान् पञ्चसहस्रमुख्यान् करोति नित्यं कृतहस्तकान् स्वयम् ॥

अत्र 'शतानामश्वानां समाहारः शताश्वम्' इति विशेषणं विशेष्येण बहुलम्' (२।१।५७) इति समासः । 'स नपुंसकम्' (२।४।१७) इति नपुंसकत्वम् । 'द्विगुरेकवचनम्' ( २।४।१ ) इत्येकवचनम् । 'अकारान्तोत्तरपदो द्विगुः स्त्रियामिष्टः' इति स्त्रीलिङ्गत्वमपि । एवं 'पञ्चगुणितं सहस्रं पञ्चसहस्रम्' इति शाकपार्थिवादित्वात्समासः । 'संख्यापूर्वो द्विगुः' ( २।१।५२ ) इति द्विगुसंज्ञा । इति तत्पुरुषः ।

अथ बहुव्रीहिः ।

**बहुव्रीहिर्द्विधा प्रोक्तः सामान्योऽथ विशेषकः ।**
**सामान्यः षट्प्रकारः स्याद् द्वितीयादिविभक्तिभिः ॥**

यथा—

प्राप्ताम्बूदयपत्तने जितरिपुर्दत्तान्नवस्त्रान् बहून्
कुर्वन्नुद्धृतशल्यमात्मविषयं रक्षन् प्रसन्नप्रजः ।
सैन्यं हेतिकरं प्रवीरपुरुषं दुर्गेषु संयोजयन्
श्रीमान् सज्जनभूपतिर्विजयते राजीवनेत्रोऽपरः ॥

अत्र 'प्राप्तमम्बु यत् तत्प्राप्ताम्बु, जिता रिपवो येन सः जितरिपुः, दत्तमन्नवस्त्रं येभ्यस्ते दत्तान्नवस्त्राः, उद्धृतं शल्यं यस्मात् तदुद्धृतशल्यम्, प्रसन्ना प्रजा यस्य सः प्रसन्नप्रजः, हेतिः करे यस्य तद्धेतिकरम्, प्रवीराः पुरुषाः यस्मिन् तत्प्रवीरपुरुषम्, राजीवे इव नेत्रे यस्य स राजीवनेत्रः' इति सर्वत्र 'अनेकमन्यपदार्थे' ( २।२।२४ ) इति समासः । अयं समानाधिकरणानामेव । व्यधिकरणानामपि क्वचिद्भवतीति 'हेतिकरम्' इति दर्शितः । एवमुपमानपूर्वोऽपि भवतीति 'राजीवनेत्र' इति दर्शितः ।

विशेषः षड्विधा प्रोक्तः संख्योत्तरपदस्तथा ।
संख्योभयपदश्चैव व्यतिहाररूपकः ।
दिगन्तरालरूपश्च सहपूर्वपदोऽपि च ॥

संख्योत्तरपदो यथा--

उपदशगृहशारीगतिविधिसंशयविदग्धनाकितवसु रम् ।
आसन्नविंशमुद्रा दण्डयति हि झटिति सज्जनाधीशः ॥

अत्र 'दशानां समीपे यानि सन्ति तान्युपदशानि' नवैकादश वेत्यर्थः । 'बहुव्रीहौ संख्येये डजबहुगणात्' ( ५।४।७३ ) इति डच् । एवं 'विंशतेरासन्ना याः सन्ति ता आसन्नविंशाः' । 'ति विंशतेर्डिति' ( ६।४।१४२ ) इति तिशब्दलोपः । उभयत्र 'संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये' ( २।२।२५ ) इति समासः । संख्योभयपदो यथा--

सज्जनेन्द्रस्य समितौ पण्डिता द्विदशाधिकाः ।
विराजन्ते, दुर्जनास्तु द्वित्राः सन्ति न सन्ति वा ॥

अत्र 'द्विरावृत्ता दश द्विदशाः' विंशतिरित्यर्थः, 'द्वौ वा त्रयो वा द्वित्राः' इति 'संख्ययाऽव्यये'ति समासः । व्यतिहाररूपो यथा —

दुर्दान्ता राजमार्गे ये दण्डादण्डि कचाकचि ।
कुर्वन्ति, तान् सुबध्नाति सज्जनेन्द्रस्य पूरुषः ॥

अत्र 'दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं दण्डादण्डि, कचेषु कचेषु गृहीत्वेदं युद्धं प्रवृत्तं कचाकचि' इति 'तत्र तेनेदमिति सरूपे' ( २।२।२७ ) इति समासः । दिगन्तरालरूपो यथा--

उदयपुरं दिशि यस्यां पृष्टा सा केति वदति वधूः ।
श्रुतपूर्वा काशीतः किल दक्षिणपश्चिमास्तीति ॥

अत्र 'दक्षिणस्याः पश्चिमायाश्च दिशोर्यदन्तरालं सा दक्षिणपश्चिमा' इति 'दिङ्नामान्यन्तराले' (२।२।२६) इति समासः । सहपूर्वपदो यथा–

सपुत्रो ब्राह्मणः कश्चित्प्रसन्नो ह्याशिषं ददौ ।
स्वस्ति सज्जनभूपाय सहामात्याय वै भवेत् ॥

अत्र 'पुत्रेण सह वर्तते सपुत्रः, अमात्येन सह सहामात्यः' इति च 'तेन सहेति तुल्ययोगे' ( २।२।२८ ) इति समासः । पूर्वत्र 'वोपसर्जनस्य' ( ६।३।८२ ) इति सहस्य सः । उत्तरत्र 'प्रकृत्याशिषि' ( ६।३।८३ ) इति न । इति बहुव्रीहिः ।

अथ द्वन्द्वः ।

द्वन्द्वस्त्रिधा समाख्यात इतरेतरयोगकः ।
द्वितीयस्तु समाहार एकशेषस्तृतीयकः ॥

यथा—

साङ्गने व्रजति सज्जनसिंहे विप्रबाहुजविशः शुभयानाः ।
संप्रगृह्य गृहिणीमपि पुत्रौ जग्मुरश्वगजपद्गमथान्ये ॥

अत्र 'विप्राश्च बाहुजाश्च विशश्च विप्रबाहुजविशः' इतीतरेतरयोगः । 'दुहिता च पुत्रश्च पुत्रौ' इति 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (१।२।६८) इत्येकशेषः । 'अश्वाश्च गजाश्च पद्गाश्च अश्वगजपद्गम्' इति 'द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्' (२।४।२) इति समाहारः । सर्वत्र 'चार्थे द्वन्द्वः' ( २।२।२९ ) इति समासो द्वन्द्वसंज्ञा च । इति द्वन्द्वः ।

अथ अव्ययीभावः ।

द्विविधश्चाव्ययीभावः सामान्यश्च विशेषकः ।
सामान्यस्तु समर्थेन समासादव्ययस्य च ॥

यथा—

सज्जनेन्द्रस्य नगरे प्रोन्नताचलवेष्टनात् ।
पश्यन्त्योऽपि न जानन्ति मुग्धा अपदिशं मुहुः ॥

अत्र 'दिशोर्मध्यमपदिशम्' इति 'अव्ययम्' (२।१।६) इति योगविभागात्समासः । मुग्धाः स्त्रिय इत्यर्थः ।

विशेषस्तु विभक्त्यर्थे समीपार्थे समृद्धिके ।
व्यृद्ध्यर्थे चाप्यभावार्थे चात्ययार्थे च साम्प्रते ॥
प्रादुर्भावे च शब्दस्य, पश्चादर्थे यथार्थके ।
आनुपूर्व्ये यौगपद्ये सादृश्यार्थे तथैव च ॥

सम्पत्त्यर्थे च साकल्येऽन्तार्थे चाव्ययमात्रकम् ।
यथाऽव्ययमसादृश्ये, यावच्चैवावधारणे ॥
मात्रार्थे प्रतिना सुप्, चाऽक्षसंख्ये परिणा तथा ।
शलाका, चाथ पञ्चम्याऽपपरी बहिरञ्चु च ॥
आङ् मर्यादाऽभिविध्योश्चाभिप्रती लक्षणेन च ।
आभिमुख्ये, लक्षणेन त्वनुर्यत्समया तथा ॥
यस्यायामेऽपि तच्चैव, तिष्ठद्गुप्रभृतीनि च ।
पारे मध्ये च षष्ठ्या वा, संख्या वंश्येन चैव हि ॥
नदीभिश्च तथा संख्याऽन्यपदार्थे सुबन्तकम् ।
एषां समासतो ज्ञेयोऽव्ययीभावो विशेषकः ॥

दिङ्मात्रमुदाह्रियते । यथा —

अधिमेदपाटमुपसज्जनसिंहं सुमहीसुरं दुरधमं निरधर्मम् ।
अतिदुःखमत्यभिभवं प्रतिघस्रं त्वनुदानमाशु भवतादितिसाधु ॥

अत्र 'मेदपाटे इत्यधिमेदपाटम्' इति विभक्त्यर्थे, 'सज्जनसिंहस्य समीपे उपसज्जनसिंहम्' इति समीपार्थे, 'महीसुराणां समृद्धिः सुमहीसुरम्' इति समृद्ध्यर्थे, 'अधमानां व्यृद्धिर्दुरधमम्' इति व्यृद्ध्यर्थे, विगता ऋद्धिर्व्यृद्धिः, 'अधर्मस्याभावो निरधर्मम्' इत्यर्थाभावे, 'दुःखस्यात्ययोऽतिदुःखम्' इति अत्ययार्थे, अत्ययो ध्वंसः, 'अभिभवः सम्प्रति न युज्यते इति अत्यभिभवम्' इति असम्प्रत्यर्थे, 'घस्रं घस्रमिति प्रतिघस्रम्' इति यथार्थे, योग्यतावीप्सापदार्थाऽनतिवृत्तिसादृश्यानि यथार्थाः, 'दानस्य पश्चादनुदानम्' इति पश्चादर्थे, 'साधुशब्दस्य प्रकाश इतिसाधु' इति शब्दप्रादुर्भावे 'अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययाऽसम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु' (२।१।६) इति समासः । एवमन्येष्वप्यर्थेषूदाहार्यम् । यथा च—

सज्जनेन्द्रे महाराजे न दोषप्रति विद्यते ।
यावच्छ्लोकमतो नाम कीर्त्यते गुणकीर्तने ॥

अत्र 'दोषस्य लेशः दोषप्रति' इति 'सुप् प्रतिना मात्रार्थे' (२।१।९) इति समासः। एवं 'यावन्तः श्लोकास्तावद्वारं नाम यावच्छ्लोकम्' इति 'यावदवधारणे' (२।१।८) इति समासः। यथा च—

येषामक्षपरि द्यूतं ये जयन्ति च तानपि ।
बहिःसज्जनराज्यं तु कुर्वन्त्यविकृता नराः ॥

अत्र 'अक्षेण विपरीतं वृत्तमक्षपरि' इति 'अक्षशलाकासंख्याः परिणा' (२।१।१०) इति समासः। एवं 'सज्जनराज्याद्बहिः बहिःसज्जनराज्यम्' इति 'अपपरिबहिरञ्चवः पञ्चम्या' (२।१।१२) इति समासः। यथा च—

आपर्वतमभिनृपगृहमनुकाननमनुतडागमुदयपुरम् ।
भुवि शिवनगनगरमिव श्रीसज्जनसिंहपालितं जयति ॥

अत्र 'पर्वतं मर्यादीकृत्य वर्तत इत्यापर्वतम्' इति 'आङ् मर्यादाऽभिविध्योः' (२।१।१३) इति समासः। 'नृपगृहस्याभिमुखम् अभिनृपगृहम्' इति 'लक्षणेनाभिप्रती आभिमुख्ये' (२।१।१४) इति समासः। 'काननस्य समीपमनुकाननम्' इति 'अनुर्यत्समया' (२।१।१५) इति समासः। तडागवदायामो यस्येत्यनुतडागम्, तडागदैर्घ्यसदृशदैर्घ्योपलक्षितमित्यर्थः। 'यस्य चायामः' (२।१।१६) इति समासः। एवमन्येऽप्यव्ययीभावा ऊह्याः। इत्यव्ययीभावः।

**एषु केचित्समासास्तु विभक्तीनामलोपनात् ।**
**अलुक्समासाः सम्प्रोक्ताः सत्युत्तरपदे परे ॥**
**तृतीया नाम्नि मनस, आज्ञायिनि परे तथा ।**
**ओजःसहोऽम्भस्तमस, आत्मनः पूरणे परे ॥**
**परात्मभ्यां चतुर्थी तु पदशब्दे परे सति ।**
**स्तोकादिभ्यः पञ्चमी च, षष्ठी चाक्रोशके तथा ॥**
**देवात्प्रिये मूर्खबोध्ये, वाग्दिक्पश्यद्भ्य एव च ।**
**युक्तिदण्डहरेष्वेव, तथा दासे दिवोऽपि च ॥**
**लाङ्गूलपुच्छशेपेषु शुनः, पुत्रे तु कुत्सने ।**

योनिविद्या[illegible]श्रुति [illegible], [illegible]स्वसृपत्योश्चैव वा ॥
सप्तमी हलदन्ताच्च, [illegible] [illegible] ।
अमूर्धमस्तकात्स्वाङ्गादकामे, [illegible] ॥
बन्धे वा हलदन्ताच्च, कृति तत्पुरुषे तथा ।
प्रावृट्शरत्कालदिवां [illegible] ॥
जे, घकालतनेष्वेव कालनाम्नोऽप्यकालतः ।
शये वासे वासिनि च, योनि[illegible]षु [illegible] ॥
इन्सिद्धबध्नातिषु च, भाषायां स्थे च सप्तमी ।
लुप्यते, न इति प्रोक्ता शेषाश्चोदाहृतिं विना ॥
विस्तरभयादिति भावः । एवं समासाश्रयविधयोऽपि ।

सज्जनेन्द्रयशोगन्धप्रसारणकरं परम् ।
एतत् समासकुसुमं द्वितीयं फुल्लतामगात् ॥

इति श्रीधर्माधिकारिकृष्णपण्डितविरचिते सज्जनेन्द्रप्रयोगकल्पद्रुमे समासकुसुमं द्वितीयम् ॥

## अथ तद्धितकुसुमम् ।

तस्मै प्रयोगाय हिताः प्रत्ययास्तद्धिताभिधाः ।
बह्वर्थानां प्रभेदेन भवन्त्येकोनविंशतिः ॥
एषु केचित्प्रगृह्यन्ते बालानामुपयोगिनः ।
अण् प्रायः सकलार्थेषु भवेत्सामान्यतः किल ॥
अपत्यार्थेऽत इञ् स्त्रीभ्यो ढक् चैवाऽग्नेः कलेरपि ।
पत्युत्तरपदाण्ण्यो, गोर्यदजादिप्रसङ्गके ॥
उत्सादिभ्योऽञ् तथा स्त्रीपुंसाभ्यां नञ् च स्नञेव च
कुञ्जादिभ्यो नडादिभ्यश्च्फञ्फकौ भवतस्तथा ॥
बिदादिभ्योऽञ् तथा गर्गादिभ्यो यञ् च भवत्यपि ।
अश्वादिभ्यश्च फञ् प्रोक्तः शुभ्रादिभ्यो ढगित्यपि ॥

**क्षुद्राभ्यो वा चतुष्पाद्भ्यो ढृक्ढञौ भवतोऽपि च ।**
**रेवत्यादेश्च कुर्वादेष्ठक् च ण्यश्च भवत्यपि ।**
**अन्येऽपि प्रत्यया बोध्याः प्रातिस्विकतयोदिताः ॥**

प्रातिस्विकतयेति, तत्तच्छब्दमुच्चार्य विहिता इत्यर्थः । एषु दिङ्मात्रं यथा—

धर्मनीतावयं पाण्डवो विक्रमे जाह्नवेयोऽवने शौरिरित्थं जनैः ।
दृष्टकार्यैस्त्रिकैर्मन्यते सर्वदा वैजवापायनः सज्जनक्ष्मापतिः ॥

अत्र 'पाण्डोरपत्यं पाण्डवः' इति 'तस्यापत्यम्' ( ४।१।९२ ) इति अण् । एवं 'जाह्नव्या अपत्यं जाह्नवेयः' इति 'स्त्रीभ्यो ढक्' (४।१।१२० ) इति ढक् , ढस्य एयादेशः । तथा 'शूरस्यापत्यं शौरिः' इति 'अत इञ्' ( ४।१।९५ ) इति इञ् । 'बीजवापस्य गोत्रापत्यं वैजवापायनः' इति 'नडादिभ्यः फक्' (४।१।९९) इति फक्, फस्य आयन् आदेशः । इत्यपत्यार्थाः ।

**रक्ताद्यर्थेषु ठक्छौ ढक् ड्यड्ड्यौ, प्रातिस्विका अपि ।**

यथा—

श्रीसज्जनेन्द्रस्य पुराङ्गनानां कौसुम्भहारिद्रसुनीलशाट्यः ।
गृह्णन्ति सौधेषु सिताभ्रपङ्क्तौ तडिद्युजीन्द्रायुधभूरिशोभाम् ॥

अत्र 'कुसुम्भेन रक्ताः कौसुम्भ्यः, हरिद्रया रक्ता हारिद्र्यः' इति 'तेन रक्तं रागात्' ( ४।२।१ ) इति अण् । 'नील्या रक्ता नील्यः' इति 'नील्या अन्' इति अन् । आदिशब्दग्राह्या यथा—

पौषे राधानुराधीये वामदेव्येन वैदिकाः ।
प्रकुर्वन्त्याशिषो वृद्ध्यायाशिषः सज्जनाधिपम् ॥

अत्र 'पुष्येण युक्तं पौषं दिनम्' इति 'नक्षत्रेण युक्तः कालः' (४।२।३) इति अण् । एवं 'राधानुराधाभ्यां युक्तं राधानुराधीयं दिनम्' इति 'द्वन्द्वाच्छः' ( ४।२।६ ) इति छः, छस्य ईयादेशः । एवं 'वामदेवेन दृष्टं वामदेव्यं साम' इति 'वामदेवाड् ड्यड्ड्यौ' ( ४।२।९ ) इति ड्यत् । अत्रापि प्रातिस्विका ज्ञेयाः । इति रक्ताद्यर्थाः ।

**तथा परिवृताद्यर्थे इन्यञ्ठक्ढञ ईरिताः ।**

यथा—

पुञ्जीभूतगजौघे रथैरनेकैश्च चार्मणैर्वास्त्रैः ।
याने सज्जननृपतेश्चलिता भूरिव विभाति सगिरिपुरा ॥

अत्र 'चर्मणा परिवृताश्चार्मणाः, वस्त्रेण परिवृता वास्त्राः' इति 'परिवृतो रथः' ( ४।२।१० ) इति अण् । आदिग्राह्या यथा—

श्रावणमासि श्रुत्वा चतुरो वेदान् हि सज्जनश्रीशः ।
क्षैरेयदाधिकान्नैरातृप्ति श्रुतिविदः प्रभोजयति ॥

अत्र 'श्रावणी पौर्णमासी अस्मिन् श्रावणः' इति 'साऽस्मिन्पौर्णमासीति' ( ४।२।२१ ) इति अण् । एवं 'क्षीरेण संस्कृतं क्षैरेयम्' इति 'संस्कृतं भक्षाः' ( ४।२।१६ ) इति अण् । 'दध्ना संस्कृतं दाधिकम्' इति 'दध्नष्ठक्' ( ४।२।१८ ) इति ठक् । इति परिवृताद्यर्थाः ।

**देवतार्थे छघन् ट्यण् ढक् ठञ् ण्यच्च डुलजादयः ।**

आदिना डामहजादिपरिग्रहः । यथा—

उद्गीतैर्द्विजनिभिरैकलिङ्गमन्त्रैः श्रैनाथैः सुमधुरपायसैर्विशेषात् ।
एकत्र श्रुतिरितरत्र वक्त्रमङ्गात्पावित्र्यं व्रजति हि सज्जनेन्द्रदेशे ॥

अत्र 'एकलिङ्गं देवता एषामैकलिङ्गाः' इतिः'श्रीनाथो देवता एषामिति श्रैनाथाः' इति च 'सास्य देवता' ( ४।२।२४ ) इति अण् । मन्त्रैरिति स्तुतिमन्त्रैः । इति देवतार्थाः ।

**सामूहिके च यञ्यत्तल्अञ्ठक्यञ्छवुञस्तथा ।**

यथा—

हास्तिकमौष्ट्रकमाश्वं पादातं ग्रामता जनता ।
भूयात् सहायताऽपि च नित्यं श्रीसज्जनेन्द्रस्य ॥

अत्र 'हस्तिनां समूहो हास्तिकम्' इति 'तस्य समूहः' (४।२।३७) इत्यधिकारे 'अचित्तहस्तिधेनोष्ठक्' ( ४।२।४७ ) इति ठक् । एवम् 'उष्ट्राणां समूह औष्ट्रकम्' इत्यत्र 'गोत्रोक्षोष्ट्रोरभ्रराजराजन्यराजपुत्रवत्समनुष्याजाद् वुञ् ( ४।२।३९ ) इति वुञ् । एवम् 'अश्वानां समूह-

आश्वम्' इति 'तस्य समूहः' (४।२।३७) इति अण् । तथा 'पदातीनां समूहः पादातम्' इति 'भिक्षादिभ्योऽण्' ( ४।२।३८ ) इति अण् । एवं 'ग्रामाणां समूहो ग्रामता, जनानां समूहो जनता' इति 'ग्रामजन-बन्धुभ्यस्तल्' ( ४।२।४३ ) इति तल् । 'सहायानां समूहः सहायता' इति 'गजसहायाभ्यां चेति वक्तव्यम्' इति तल् । इति सामूहिकाः ।

**क्रीडाद्यर्थे णञौ ठक् च वुञिनिश्च भवन्ति हि ॥**

यथा—

युद्धे कौशलसिद्ध्यै सज्जननृपतेस्तु सैनिकैर्बहुशः ।
दाण्डा मौष्टा हैता पाट्टीशा क्रीड्यते नित्यम् ॥

अत्र 'दण्डः प्रहरणमस्यां क्रियायां सा दाण्डा' एवं 'मुष्टिः प्रहरणं हेतिः प्रहरणं पट्टीशः प्रहरणमस्यां सा मौष्टा हैता पाट्टीशा' इति 'तदस्यां प्रहरणमिति क्रीडायां णः' (४।२।५७) इति णः । आदिग्राह्या यथा —

त्रैविद्यमीमांसकपाणिनीया नैयायिका ज्यौतिषिका विभान्ति ।
काव्या अपीन्द्रस्य सदोनिविष्टा ऋषिप्रवीरा इव सज्जनस्य ॥

अत्र 'त्रिविधा विद्या त्रिविद्या, तामधीयते विदन्ति वा त्रैविद्याः' इति 'तदधीते तद्वेद' ( ४।२।५९ ) इति अण् । एवं 'मीमांसामधीयते विदन्ति वा मीमांसकाः' इति 'क्रमादिभ्यो वुन्' ( ४।२।६१ ) इति वुन् । एवं 'पाणिनीयमधीयते विदन्ति वा पाणिनीयाः' इति अण्, 'ण्यक्षत्रियार्षञितो यूनि लुगणिञोः (२।४।५८) इति तल्लुक् च । 'नैयायिकाः' इति क्रतूक्थादिसूत्रान्ताट्ठक्' ( ४।२६० ) इति ठक् । एवं 'काव्याः' इत्यत्रापि अण् । इति क्रीडाद्यर्थाः ।

**देशे तदस्मिन्नस्तीति, तेन निर्वृत्तमित्यपि ।**
**तन्निवासोऽदूरभव इत्येते चातुरर्थिकाः ॥**
**एषु चोरञ्, बह्वजङ्गान्मतुपः, सङ्कलादितोऽञ् ।**
**अरीहणादेर्वुञ् प्रोक्तः कृशाश्वादेश्च छण् मतः ॥**
**कुमुदादेष्ठजित्युक्तः काशादिभ्य इलस्तथा ।**
**तृणादिभ्यश्च सः प्रोक्तः प्रेक्षादिभ्य इनिः स्मृतः ॥**

अश्मादे रश्च, सख्यादेर्ढञ्, णयः सङ्काशमुख्यतः ।
बलादेर्यश्च, पक्षादेः फक्, कर्णादेश्च फिञ् भवेत् ॥
सुतङ्गमादिभ्य इञ् च प्रगद्यादेर्ञ्य इत्यपि ।
वराहादेश्च कक् प्रोक्तः कुमुदादेश्च ठक् भवेत् ॥
मध्वादिभ्यो मतुप् चैवोत्करादिभ्यश्छ ईरितः ।
अन्येऽपि प्रत्यया ज्ञेयाः प्रातिस्विकतयोदिताः ॥

यथा--

प्रायः समस्ततरुजातिविराजितत्वा-
देकस्तरुर्बहुतया विवृतिं करोति ।
नो मेदपाटविषये बहलर्धियुक्ते
ह्यौदुम्बरप्रभृतिवन्नृपसज्जनस्य ॥

अत्र 'उदुम्बराः सन्त्यस्मिन् देशे औदुम्बरः' इति 'तदस्मिन्नस्तीति देशे तन्नाम्नि' ( ४।२।६८ ) इति अण् । यथा च--

मुदितोत्साहितपौरा कौशाम्बी वत्सराजसमयेऽभूत् ।
तदधिकमौदयमधुना ह्युदयपुरं सज्जनेशसमयेऽस्ति ॥

अत्र 'कुशाम्बेन निर्वृत्ता कौशाम्बी, उदयेन निर्वृत्तमौदयम्' इति 'तेन निर्वृत्तम्' ( ४।२।६८ ) इति अण् । यथा च—

परितः प्रावृतिमत्त्वाद् वैरेयत्वाच्च बल्यत्वात् ।
नगरत्वादपि सज्जनसिंहस्योदयपुरं हि सुरपुरवत् ॥

अत्र 'वीराणां निवासो वैरेयम्' इति 'वुञ्छण्' (४।२।८०) इति सूत्रे 'सख्यादिभ्यो ढञ्' इति ढञ् । एवं 'बलानां निवासो बल्यम्' इति 'बलादिभ्यो यः' इति यः । एवं 'नगानां निवासो नगरम्' इति 'अश्मादिभ्यो रः' इति रः । यथा च—

सोपानराजिपरिमण्डिततीरदेश-
स्वच्छातिनिम्नसलिलाशयशोभिताऽन्तम् ।
संस्मारयत्युषसि मज्जनकारिलोकान्
वाराणसीं पुरवरं नृपसज्जनस्य ॥

अत्र 'वरणा च असिश्च वराणस्यौ, पृषोदरादित्वाद्वर्णव्यत्ययः, वराणस्योरदूरभवं वाराणसी' इति, यद्वा 'वरमनो जलं यस्याः सा वराऽना:, वराऽनसो गङ्गाया अदूरभवं वाराणसी' इति 'अदूरभवश्च' ( ४।२।७० ) इति अण् । एवमन्येऽप्युदाहार्याः । इति चातुरर्थिकाः ।

**तत्र जातश्च, तत्सोढमस्य, तत्र भवस्तथा ।**
**तदागतः, प्रभवति, निवासः सोऽस्य इत्यपि ॥**
**अधिकृत्य कृतो ग्रन्थः, सोऽस्य भक्तिस्तथैव च ।**
**तेन प्रोक्तमुपज्ञातं तथा तस्येदमित्यपि ॥**
**एते च शैषिकाः प्रोक्ता, एषु कव्यादितो ढकञ् ।**
**नद्यादिभ्यश्च ढक् प्रोक्तो वृद्धाच्छः परिकीर्तितः ॥**
**काश्यादिभ्यष्ठञ्ञिठौ चोकारान्ताच्चैव ठञ् मतः ।**
**धूमादिभ्यश्च वुञ् चोक्तः कालाट्ठञ् परिकीर्तितः ॥**
**ञ्यः स्यात्परिमुखादिभ्यस्तथाऽध्यात्मादितश्च ठञ् ।**
**योनिविद्यायुजो वुञ् च, ऋदन्ताट्ठञ् प्रकीर्तितः ॥**
**शिशुक्रन्दादितश्छश्च, ञ्यो भवेच्छाण्डिकादितः ।**
**सिन्धुतक्षशिलादिभ्यश्चाऽणञौ परिकीर्तितौ ॥**
**वुञ् चैव हि कुलालादेः, छश्च रैवतिकादितः ।**
**प्रातिस्विकतया प्रोक्ता अन्येऽपि प्रत्यया मताः ॥**

यथा—

नादेयानि व सरसो ग्रामेयकनागरेयकैर्वारि ।
उपयुज्यन्ते हि नदीमातृकवन्मेदपाटविषयोऽस्ति ॥

अत्र 'नद्यां जातानि नादेयानि' इति 'तत्र जातः' ( ४।३।२५ ) इत्यधिकारे 'नद्यादिभ्यो ढक्' ( ४।२।९७ ) इति ढक् । एवं 'ग्रामे जाता ग्रामेयकाः, नगर्यां जाता नागरेयकाः' इति 'कव्यादिभ्यो ढकञ्' ( ४।२।९५ ) इति ढकञ् । 'वारि' इति बहुवचनम् । यथा च—

पद्माकरा मैदपाटाः पारावारजिगीषवः ।
सद्वीपत्वाद्विरुतत्वाद्गाम्भीर्यान्मधुरत्वतः ॥

अत्र 'मेदपाटे भवा मैदपाटाः' इति 'तत्र भवः' (४।३।५३) इति अण्। यथा च—

आविमुक्तो मेदपाटे वृत्त्यायागत्य सुन्दरम्।
सज्जनेन्द्रप्रयोगीयं ग्रन्थं रचितवानहम्॥

अत्र 'अविमुक्तादागत आविमुक्तः' इति 'तत आगतः' (४।३।७४) इति अण्। एवं 'सज्जनेन्द्रश्च प्रयोगश्च सज्जनेन्द्रप्रयोगौ तावधिकृत्य कृतो ग्रन्थः सज्जनेन्द्रप्रयोगीयः' इति 'अधिकृत्य कृते ग्रन्थे' (४।३।८७) इत्यधिकारे 'शिशुक्रन्दयमसभद्वन्द्वेन्द्रजननादिभ्यश्छः' (४।३।८८) इति द्वन्द्वाच्छः, छस्य ईयादेशः। सज्जनेन्द्रस्याधिकृतत्वं वर्णनीयत्वेन बोध्यम्। यथा च—

आपूपिकान् पायसिकांस्तैर्द्रव्यैर्ब्राह्मणान् बहून्।
ऐकलिङ्गः सज्जनेशस्तत्प्रीत्यै तर्पयत्यलम्॥

अत्र 'अपूपा भक्तिरेषामापूपिकाः, पायसं भक्तिरेषां पायसिकाः' इति 'भक्तिः' (४।३।९५) इत्यधिकारे 'अचित्ताददेशकालाट्ठक्' (४।३।९६) इति ठक्। एवम् 'एकलिङ्गं भक्तिरस्यैकलिङ्गः' इति 'भक्तिः' (४।३।९५) इति अण्। यथा —

द्योतमानाभिरनिशं यदीयातुलकीर्तिभिः।
जिता चान्द्रमसी ज्योत्स्ना, स जीयात् सज्जनाधिपः॥

अत्र 'यस्येमा यदीयाः' इति 'त्यदादीनि च' (१।१।७४) इति वृद्धसंज्ञायां 'वृद्धाच्छः' (४।२।११४) इति छः। एवं 'चन्द्रमस इयं चान्द्रमसी' इति 'तस्येदम्' (४।३।१२०) इति अण्। एवमन्येऽप्युदाहार्याः। इति शैषिकाः।

**वैकारिकेषु त्वोरञ् स्यात् पलाशादिभ्य एव च।**
**प्राणिभ्यो रजतादेश्च, मयड् वृक्षशरादितः।**
**अन्येऽप्येवंविधा बोध्याः प्रातिस्विकतयोदिताः॥**

यथा—

कनकमयकटकहस्ताः सौवर्णांशुकनिबद्धकटिबन्धाः।

सोत्तंसोष्णीषयुता (१) देवा इव सज्जनाश्रिता भान्ति ॥

अत्र 'कनकस्य विकाराः कनकमयाः' इति 'तस्य विकारः' (४।३।१३४) इत्यधिकारे 'मयड् वैतयोर्भाषायामभक्ष्याच्छादनयोः' (४।३।१४३) इति मयट्। एवं 'सुवर्णस्य विकारः सौवर्णम्' इति 'तस्य विकारः' (४।३।१३४) इति अण्। एवमन्येऽप्युदाहार्याः। इति वैकारिकाः।

**तेन दीव्यत्यथ जितं खनत्यपि जयत्यपि।**
**संस्कृतं, तरतीत्येवं, चरत्यपि, हरत्यपि॥**
**उपसिक्तं च, संसृष्टं, तथोञ्छति च, रक्षति।**
**अवक्रयः, तस्य धर्म्यं, पण्यं, शिल्पं तथैव च॥**
**तथा प्रहरणं, शीलं, वृत्ता चाध्ययने क्रिया।**
**हितं भक्षाश्च, नियतं तदस्मै दीयतेऽपि च॥**
**एते ठकोऽवधीयाश्च, ठक् सामान्यत एषु हि।**
**पर्पादितः ष्ठन् विहितो भस्त्रादिभ्यस्तथैव च।**
**ऋकारान्तादञित्युक्तः केचित्प्रातिस्विका अपि॥**

यथा--

भवति कदाचित् खाङ्गिक औडुपिकोऽप्याश्विकश्च, नारीभिः।
विहरति, भवति सदैव हि सामाजिक एष सज्जनश्रीशः॥

अत्र 'खङ्गेन दीव्यति खाङ्गिकः' इति 'तेन दीव्यति खनति जयति जितम्' (४।४।२) इति ठक्। एवम् 'उडुपेन तरत्यौडुपिकः' इति 'तरति' (४।४।५) इति ठक्। तथा 'अश्वेन चरत्याश्विकः' इति 'चरति' (४।४।८) इत्यधिकारे 'पर्पादिभ्यः ष्ठन्' (४।४।१०) इति ष्ठन्। एवं 'नरस्य धर्म्या नार्यः' इति 'तस्य धर्म्यम्' (४।४।४७) इत्यधिकारे 'ऋतोऽञ्' (४।४।४९) इति सूत्रे 'नराच्चेति वक्तव्यम्' इति अञ्। तथा 'समाजं रक्षति सामाजिकः' इति 'रक्षति' (४।४।३३) इति ठक्। एवमन्येऽप्युदाहार्याः। इति ठकोऽवधीयाः।

---

(१) बहुविधरागोष्णीषा।

**तत्र साधुस्तथाऽन्ये च प्राग्घितीया इतीरिताः ।**
**यत् सामान्यः, प्रतिजनादितः खञ् , ठक् कथादितः॥**
**गुडादिभ्यश्च ठञ् प्रोक्तोऽन्ये तु प्रातिस्विका अपि ।**

यथा—

दीनापन्नशरण्यो वर्णाश्रमशासने च धौरेयः ।
सवयस्यः सज्जनराट् छन्दस्यमपीह धर्म्यमाचरति ॥

अत्र 'शरणे साधुः शरण्यः' इति 'तत्र साधुः' ( ४।४।९८ ) इति यत् । एवं 'धुरं वहति धौरेयः' इति 'तद्वहति' ( ४।४।७६ ) इत्यर्थे धुरो यड्ढकौ' (४।४।७७) इति ढक् । तथा 'वयसा तुल्या वयस्याः' इति 'नौवयोधर्मविषमूलमूलसीतातुलाभ्यस्तार्यतुल्यप्राप्यवध्याऽऽनाम्य-समसमितसंमितेषु' ( ४।४।९१ ) इति तुल्यार्थे वयःशब्दाद् यत् । तथा छन्दसा निर्मितं छन्दस्यम् , इच्छया कृतमित्यर्थः । 'छन्दसो निर्मिते' (४।४।९३) इति निर्मितार्थे छन्दःशब्दाद् यत् । एवं 'धर्मादनपेतं धर्म्यम्' इति 'धर्मपथ्यर्थन्यायादनपेते' (४।४।९२) इति अनपेतार्थे धर्मशब्दाद् यत् । शरण्यादन्ये प्रातिस्विकाः । एवमन्येऽप्युदाहार्याः । इति प्राग्घितीयाः ।

**तस्मै हितं, तदर्थं च विकृतेः प्रकृतौ तथा ।**
**स्यात्तदस्य तदस्मिंश्च प्राक्क्रीतीया उदाहृताः ॥**
**एषु सामान्यतश्छः स्याद् , यद् भवेद्गवादितः ।**
**शरीरावयवाच्चैवान्ये च प्रातिस्विका अपि ।**

यथा—

गिरियुगपि मेदपाटः सर्वीयः सर्ववस्तुसद्भावात् ।
लवणीयजलधिमस्त्वाद्वरः सुखीयोऽपि सज्जनस्वाम्यात् ॥

अत्र 'सर्वस्मै हितः सर्वीयः' इति 'प्राक् क्रीताच्छः' ( ५।१।१ ) इत्यधिकारे 'तस्मै हितम्' (२।२।५) इति छः । एवमन्येऽप्युदाहार्याः । इति प्राक्क्रीतीयाः ।

तेन क्रीतं, तन्निमित्तं संयोगोत्पातकौ तथा ।
तस्येश्वरस्तस्य वापो, विदितस्तत्र चैव हि ॥
वृद्ध्यायलाभशुल्कोपदास्तदस्मिंश्च दीयते ।
तद्धरत्यावहति च वह,त्यवहरत्यपि ॥
पचत्यथो सम्भवति तदस्य परिमाणकम् ।
तदर्हति, तथा तेन निर्वृत्तं, तमधीष्टकः ॥
भृतो भूतस्तथा भावी, तदस्य ब्रह्मचर्यकम् ।
परिजय्यं लभ्यकार्यसुकरं तेन चैव हि ॥
कार्यं च दीयते तत्र, सम्पादिनि तथैव च ।
प्रयोजनं, तदन्येऽपि प्रोक्ताः प्राग्वतयस्त्विमे ॥
एषु सामान्यतष्ठञ् च, निष्कादिभ्यष्ठगित्यपि ।
दण्डादिभ्यश्च यत् प्रोक्तः शेषाः प्रातिस्विकास्तथा ॥

यथा—

आयुतिकादधिकमपि प्रगृह्यते वस्तु सज्जनेशेन ।
किं चित्रं यदमूल्यं तदपि स वै विप्रसात्कुरुते ॥

अत्र 'अयुतेन क्रीतमायुतिकम्' इति 'तेन क्रीतम्' ( ५।१।३७ ) इति ठञ्, ठस्य इकादेशः । यथा च—

शतिकः साहस्रश्चाऽगुणिनां गुणिनां च विप्राणाम् ।
सज्जननृपसंयोगो भवति हि किल मेदपाटयातानाम् ॥

अत्र 'शतस्य निमित्तं शतिकः' इति 'तस्य निमित्तं संयोगोत्पातौ' ( ५।१।३८ ) इत्यधिकारे 'शताच्च ठन्यतावशते' ( ५।१।२१ ) इति ठन् । एवं 'सहस्रस्य निमित्तं साहस्रः' इति 'शतमानविंशतिकसहस्र-वसनादण्' ( ५।१।२७ ) इति अण् । यथा च—

द्विजेभ्यः सज्जनः श्रीमान् पार्थिवो मैदपाटिकः ।
प्रास्थिकानि द्रौणिकानि खारीकाणि ददात्यलम् ॥

अत्र 'पृथिव्यां विदितः पार्थिवः' इति 'तत्र विदितः' (५।१।४३) इत्यर्थे 'सर्वभूमिपृथिवीभ्यामणञौ' ( ५।१।४१ ) इति अञ् । एवं

'मेदपाटस्येश्वरो मैदपाटिकः' इति 'तस्येश्वरः' ( ५।१।४२ ) इति ठञ्। तथा 'प्रस्थानां वापाः प्रास्थिकानि, द्रोणानां वापाः द्रौणिकानि, खारीणां वापाः खारीकाणि' इति 'तस्य वापः' ( ५।१।४५ ) इति ठञ्। उप्यन्ते येष्विति वापाः, क्षेत्राणीत्यर्थः। यथा च --

दत्ते गृह्णाति तथा दत्ते गृह्णाति सज्जनक्ष्माभृत्।
शत्यं शतिकं धर्म्यं शत्यं शतिकं यथायथं काले॥

अत्र 'शतं वृद्धिर्दीयतेऽस्मिन् शत्यम्, शतमायो दीयतेऽस्मिन् शतिकम्, शतं लाभो दीयतेऽस्मिन् शत्यम्, शतं शुल्कं दीयतेऽस्मिन् शतिकम्' इति 'तदस्मिन् वृद्ध्यायलाभशुल्कोपदा दीयते' ( ५।१।४७ ) इत्यधिकारे 'शताच्च ठन्यतावशते' ( ५।१।२१ ) इति यट्ठनौ। अस्मिन् राजनि उत्कोचाभावात् उपदोदाहरणं नास्ति। यथा च—

प्रास्थिकादिषु पात्रेषु प्रास्थिकादीनि सर्वशः।
दत्त्वाऽतिथीन् प्रास्थिकादीन् संभोजयति सज्जनेट्॥

अत्र 'प्रस्थं सम्भवति प्रास्थिकम्' प्रस्थं स्वस्मिन् सम्भावयतीत्यर्थः, एवं 'प्रस्थमवहरति पचति वा' इति 'सम्भवत्यवहरति पचति' (५।१।५२) इति ठञ्। एवं 'प्रस्थं परिमाणमस्य' इति 'तदस्य परिमाणम्' ( ५।१।५७ ) इति ठञ्। यथा च—

श्वैतच्छात्रिक एष श्रीमान् सज्जननृपोऽवधानेन।
अर्घ्ये दण्ड्ये वध्ये यथायथं योग्यमाचरति॥

अत्र 'श्वेतच्छत्रमर्हति श्वैतच्छात्रिकः' इति 'तदर्हति' (५।१।६३) इति ठञ्। एवम् 'अर्घमर्हति अर्घ्यः, दण्डमर्हति दण्ड्यः, वधमर्हति वध्यः' इति 'दण्डादिभ्यो यत्' ( ५।१।६६ ) इति यत्। यथा च—

राष्ट्रे यस्य च मासिका द्विजवराः संसेविता मासिकै-
र्भृत्यैर्मासिक उत्सवे दिविषदां हर्षैर्युता मासिकैः।
भक्त्या चाह्निकपूजनादिकमहो कुर्वन्ति सर्वर्द्धये
प्रत्यब्दं, स हि तेन सज्जननृपो वर्वर्ति सर्वोपरि॥

अत्र 'मासमधीष्टा मासिकाः' सत्कृत्य व्यापारिता इत्यर्थः, एवं 'मासं भृता मासिकाः' वेतनेन क्रीता इत्यर्थः, एवं 'मासं भावी मासिकः' उत्सवः, एवं 'मासं भूता मासिकाः' तावत्कालं व्याप्य स्थिता इत्यर्थः। 'तमधीष्टो भृतो भूतो भावी' ( ५।१।८० ) इति ठञ् । तथा 'अह्ना निर्वृत्तमाह्निकम्' इति 'तेन निर्वृत्तम्' ( ५।१।७९ ) इति ठञ् । एवमन्येऽप्युदाहार्याः । इति प्राग्वतयः ।

**तेन तुल्यं क्रिया चेच्च, तत्र तस्येव चेत्यपि ।**
**तदर्हं चेति गदितास्त्वार्थिका, एषु वै वतिः ॥**

यथा—

सज्जनेन्द्रो महीपालः स्वकर्मनियमादिषु ।
करोत्याचरणं नित्यमनालस्येन विप्रवत् ॥

अत्र 'विप्रेण तुल्यं विप्रवत्' इति 'तेन तुल्यं क्रिया चेद्वतिः' ( ५।१।११५ ) इति वतिः । यथा च—

काशीवन्मेदपाटेऽस्मिन्नेकलिङ्ग विराजते ।
विधिवत् पूजितस्यास्य प्रभावो विश्वनाथवत् ॥

अत्र 'काश्यामिव काशीवत् , विश्वनाथस्येव विश्वनाथवत्' इति 'तत्र तस्येव' ( ५।१।११६ ) इति वतिः । एवं 'विधिमर्हति विधिवत्' इति 'तदर्हम्' ( ५।१।११७ ) इति वतिः । इति त्वार्थिकाः ।

**तस्य भावस्तस्य कर्म, भावकर्मार्थका इमे ।**
**एषु तु त्वतलौ, पृथ्वादिभ्यः स्यादिमनिच् खलु ॥**
**ष्यञ् च वर्णदृढादिभ्यो गुणार्थाद्ब्राह्मणादितः ।**
**कर्मण्यपि च, पत्यन्ताद् यक् पुरोहितमुख्यतः ॥**
**योपधाच्च गुरूपान्त्याद् वुञ् द्वन्द्वाच्च प्रकीर्तितः ।**
**तथा मनोज्ञादिभ्यश्च, शेषाः प्रातिस्विका अपि ॥**

यथा—

राजत्वं क्षत्रियता शूरत्वं ब्राह्मणप्रियता ।
सज्जनसिंहनृपालादितरस्मिन्नैव दृश्यते भूमौ ॥

अत्र 'राज्ञो भावः राजत्वम्, क्षत्रियस्य भावः क्षत्रियता, शूरस्य भावः शूरत्वम्, ब्राह्मणप्रियस्य भावः ब्राह्मणप्रियता' इति 'तस्य भावस्त्वतलौ' ( ५।१।११९ ) इति त्वतलौ। यथा च—

दुःखानां महिमा, सदस्सु लघिमा, कीर्तेः परश्चाऽणिमा
प्राकाम्यं प्रपलायनस्य, गरिमा बाह्यस्य शीर्षे भृशम्।
प्राप्तिः काननकन्दरासु, वशिता पत्न्यां, तनावीशिता
चेत्थं सज्जनभूपते रिपुकुले सिद्ध्यष्टकं जायताम्॥

अत्र 'महतो भावः महिमा, लघोर्भावः लघिमा, अणोर्भावः अणिमा, गुरोर्भावः गरिमा' इति 'पृथ्वादिभ्य इमनिज्वा' ( ५।१।१२२ ) इति इमनिच्। यथा च--

धावल्यं प्रापिते कीर्त्या त्रैलोक्ये सज्जनेशितुः।
शङ्खचक्रगदापद्मैरेवाबोधि हरिं रमा॥

अत्र 'धवलस्य भावो धावल्यम्' इति 'वर्णदृढादिभ्यः ष्यञ् च' ( ५।१।१२३ ) इति ष्यञ्। यथा च--

मेदपाटे सज्जनेन्द्रे राज्यं कुर्वति धर्मतः।
विद्यया तपसा चापि ब्राह्मण्यं प्रोज्ज्वलं ह्यभूत्॥

अत्र 'राज्ञः कर्म राज्यम्, ब्राह्मणस्य कर्म ब्राह्मण्यम्' इति 'गुणवचनब्राह्मणादिभ्यः कर्मणि च' ( ५।१।१२४ ) इति ष्यञ्। चकाराद्भावेऽपि। एवमन्येऽप्युदाहार्याः। इति भावकर्मार्थाः।

**धान्यानां भवनं चैव, तेन वित्तस्तथैव च।**
**प्रमाणं, परिमाणं च, स एषां ग्रामणीस्तथा॥**
**एते पाञ्चमिकाः प्रोक्ता, एषु खञ् ढक् छ यत् तथा।**
**मूले कर्णादितो जाहच् पाके पील्वादितः कुणप्॥**
**तदस्य सञ्जातमिति तारकादेरितच् तथा।**
**प्रमाणे द्वयसज्दघ्नञ्मात्रचः परिकीर्तिताः॥**
**परिमाणे वतुप् चैव, संख्यायास्तयबङ्कके।**
**मयड् गुणनिमाने च, गोषदादेश्च वुन् भवेत्॥**

आकर्षादेश्च कन् प्रोक्त इष्टादिभ्य इनिस्तथा ।
एतेषु चान्ये बहवः शेषाः प्रातिस्विका अपि ॥

यथा--

शालेयं मौद्गीनं गौधूमीनं च यव्यमाषीणम ।
क्षेत्रं वितरति विद्याचुञ्चुभ्यः सज्जनेड् बहुशः ॥

अत्र 'शालीनां भवनं शालेयम्' इति 'धान्यानां भवने क्षेत्रे खञ्' ( ५।२।१ ) इत्यधिकारे 'व्रीहिशाल्योर्ढक्' ( ५।२।२ ) इति ढक् । एवं 'मुद्गानां भवनं मौद्गीनम्, गोधूमानां भवनं गौधूमीनम्' इति 'धान्यानां भवने क्षेत्रे खञ्' (५।२।१) इति खञ् । तथा 'यवानां भवनं यव्यम्' इति 'यवयवकषष्टिकाद्यत्' ( ५।२।३ ) इति यत् । एवं 'माषाणां भवनं माषीणम्' इति 'विभाषा तिलमाषोमाभङ्गाणुभ्यः' (५।२।४) इति खञ् । तथा 'विद्यया वित्ता विद्याचुञ्चवः' इति 'तेन वित्तश्चुञ्चुप्चणपौ' ( ५।२।२६ ) इति चुञ्चुप् । यथा च--

पुरुषद्वयसानामपि पयसां किल मेदपाटसरसीनाम् ।
व्योमस्था इव तारा अन्तःस्थाः शुक्तयो भान्ति ॥

अत्र 'पुरुषः प्रमाणमेषां पुरुषद्वयसानि' इति 'प्रमाणे द्वयसज्दघ्नञ्मात्रचः' ( ५।२।३७ ) इत्यधिकारे 'पुरुषहस्तिभ्यामण् च' (५।२।३८) इति चकारेण द्वयसच् । यथा च--

यत्पादजाहरजसाऽलङ्कृतमूर्धैव राजतिलकत्वम् ।
प्राप्नोति बाहुजोऽतस्ते सज्जनसिंहकाः सर्वे ॥

अत्र 'पादस्य मूलं पादजाहम्' इति 'तस्य पाकमूले पील्वादिकर्णादिभ्यः कुणब्जाहचौ ( ५।२।२४ ) इति जाहच् । एवं 'सज्जनसिंहो मुख्य एषां सज्जनसिंहकाः' इति 'स एषां ग्रामणीः' (५।२।७८) इति कन् । यथा च--

वेदचतुष्टयविज्ञाः पण्डितवर्याश्च शोभनैर्विधिभिः ।
विपदो हरन्त्यतोऽयं निरुपद्रव आर्यसज्जनो जयति ॥

अत्र 'चत्वारोऽवयवा अस्य चतुष्टयम्' इति 'संख्याया अवयवे

तयप्' ( ५।२।४२ ) इति तयप् । एवं 'पण्डा सञ्जाता एषां पण्डिताः' इति 'तदस्य सञ्जातं तारकादिभ्य इतच्' ( ५।२।३६ ) इति इतच् । एवमन्येऽप्युदाहार्याः । इति पाञ्चमिकाः ।

**तदस्यास्त्यस्मिन्निति च मत्वर्थीयाः प्रकीर्तिताः ।**

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने ।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः ॥

**रसादिभ्यो मतुप् प्रोक्तः सिध्मादेर्लच् प्रकीर्तितः ।**
**लोमादिभ्यश्च पामादेः पिच्छादिभ्यः शनेलचः ॥**
**अकारान्तादिनिठनौ व्रीह्यादिभ्यस्तथैव च ।**
**तुन्दादिभ्य इलच् चैवाऽर्शआदिभ्योऽच् प्रकीर्तितः ॥**
**सुखादिभ्य इनिश्चैव पुष्करादिभ्य एव च ।**
**बलादिभ्यो मतुप् चैव शेषाः प्रातिस्विका अपि ॥**

यथा—

प्रजासु स्नेहवान्, सत्सु मृदुलः, कर्कशो रिपौ ।
लक्ष्मणो दर्शने, दण्डी दुष्टे सज्जनभूपतिः ॥

अत्र 'स्नेहोऽस्यास्ति स्नेहवान्' इति 'तदस्यास्त्यस्मिन्निति मतुप्' ( ५।२।९४ ) इत्यधिकारे 'रसादिभ्यश्च' ( ५।२।९५ ) इति मतुप् । तथा 'मृदु अस्यास्तीति मृदुलः' इति 'सिध्मादिभ्यश्च' ( ५।२।९७ ) इति लच् । मृदु, मार्दवमित्यर्थः । एवं 'कर्कमस्यास्ति कर्कशः' इति 'लोमादिपामादिपिच्छादिभ्यः शनेलचः' ( ५।२।१०० ) इति लोमादित्वात् शः । कर्क शस्त्रम् । एवं 'लक्ष्मीरस्यास्ति लक्ष्मणः' इति पामादित्वात् नः । 'लक्ष्म्या अच्च' इति अकारादेशः । तथा 'दण्डोऽस्यास्ति दण्डी' इति 'अत इनिठनौ' ( ५।२।११५ ) इति इनिः । यथा च—

ब्राह्मणशीलिनि बाहुजधर्मिणि परिषद्बले विचारवति ।
स्वामिनि सज्जनसिंहे राजन्वान् मेदपाटोऽभूत् ॥

अत्र 'ब्राह्मणस्य शीलमस्यास्तीति ब्राह्मणशीली, बाहुजस्य धर्मो-

ऽस्यास्तीति बाहुजधर्मी' इति 'धर्मशीलवर्णान्ताच्च' ( ५।२।१३२ ) इति इनिः । बाहुजः क्षत्रियः । एवं 'परिषदस्यास्ति परिषद्वलः' इति 'रजःकृष्यासुतिपरिषदो वलच्' ( ५।२।११२ ) इति वलच् । 'विचारोऽस्यास्ति विचारवान्' इति 'तदस्यास्त्यस्मिन्निति मतुप्' (५।२।९४) इति मतुप् प्रशंसायाम् । एवं 'स्वमस्यास्ति स्वामी' इति 'स्वामिन्नैश्वर्ये' ( ५।२।१२६ ) इति आमिनच् । तथा 'शोभनो राजास्यास्ति राजन्वान्' इति 'राजन्वान् सौराज्ये' ( ८।२।१४ ) इति मतुप् । एवमन्येऽप्युदाहार्याः । इति मत्वर्थीयाः ।

**विभक्तिस्वार्थकालाद्यर्था: प्रत्ययाः प्राग्दिशीयकाः ।**
**एषु पञ्चम्यास्तसिल् च सप्तम्यास्त्रलित्यपि ॥**
**किंसर्वनामबहुलोऽधुनादानींहदार्हिलः ।**
**इदंकिमेतत्तद्भ्यश्च थाथमुः कन् च कीर्तिताः ॥**

यथा—

इह सज्जनसिंह एव दाता न हि कुत्रापि ततोऽपरस्तथास्ति ।
अधुना सुविचार्य चेतसीत्थं गुणिनो यान्ति सदैव मेदपाटम् ॥

अत्र 'अस्मिन्निति इह' इति 'इदमो हः' ( ५।३।११ ) इति हः, 'इदम इश्' ( ५।३।३ ) इति इदम्शब्दस्य इश् आदेशः । एवं 'तस्मादिति ततः' इति तच्छब्दात् 'पञ्चम्यास्तसिल्' (५।३।७) इति तसिल् । एवं 'तत्प्रकारकस्तथा' इति 'प्रकारवचने थाल्' ( ५।३।२३ ) इति थाल् । तत्सदृश इत्यर्थः । एवम् 'अस्मिन् काले अधुना' इति 'अधुना' (५।३।१७) इति अधुना प्रत्ययः । एवम् 'अनेन एतेन वा प्रकारेण इत्थम्' इति 'इदमस्थमुः' (५।३।२४) इति थमुप्रत्ययः । एवं 'सर्वस्मिन् काले दा, सदा' इति 'सर्वैकान्यकिंयत्तदः काले दा' (५।३।१५) इति दा, 'सर्वस्य सोऽन्यतरस्यां दि' (२।३।६) इति सर्वस्य स आदेशः । इति प्राग्दिशीयाः ।

**भूतपूर्वेऽतिशायिके विभक्त्ये प्रशंसने ।**
**आसमाप्तौ कुत्सिते चाऽज्ञाते चैवाऽनुकम्पिते ॥**

**अल्पे ह्रस्वे गर्विते ऽर्थे प्रागिवीया इमे मताः ।**
**एषु दिग्देशकालेभ्योऽस्तात्यस्यात्येनपो मताः ॥**
**आजाहि च तथा ज्ञेयो विधार्थे धा धमुञ् मतः ।**
**चरट् रूप्य तमप् चेष्ठन् तरबीयसुनौ तथा ॥**
**रूपप् कल्पप् देश्य देशीयर् जातीयर् बहुच् मतः ।**
**अव्ययेभ्यः सर्वनाम्नोऽप्यकच्, कश्च तथैव हि ॥**
**जातिनाम्नो मनुष्यात् कन् केचित् प्रातिस्विका अपि ।**

यथा—

उपरिष्टाद्गिरेरुच्चैः कासारस्य पुरः शुभाः ।
सज्जनेन्द्रगृहा भान्ति दूराच्छुदिगृहा इव ॥

अत्र 'ऊर्ध्वमित्युपरिष्टात्' इति 'उपर्युपरिष्टात्' ( ५।३।३१ ) इति ऊर्ध्वशब्दात् रिष्टातिल्, ऊर्ध्वशब्दस्य उपादेशश्च अस्तातेर्विषये । एवं 'पूर्वस्यामिति पुरः' इति 'पूर्वाधरावराणामसिपुरधवश्चैषाम्' (५।३।३९) इति अस्तात्यर्थे असिः, पूर्वशब्दस्य पुरादेशः । यथा च—

एकलिङ्गं सज्जनेन्द्रस्थितेरस्त्युत्तराहि यत् ।
तदुत्तराम्नायासिद्धिस्तेन लोकोत्तरो नृपः ॥

अत्र 'उत्तरस्यामित्युत्तराहि' इति 'उत्तराच्च' ( ५।३।३८ ) इति आहिप्रत्ययः । यथा च—

विपथचरं क्षोदिष्ठं पन्थानं चैकलिङ्गयात्रायाः ।
सज्जनभूपः कृतवान् श्रेयांसं सत्पथं सुखेनैतुम् ॥

अत्र 'विपथो भूतपूर्वः विपथचरः' इति 'भूतपूर्वे चरट्' ( ५।३।५३ ) इति चरट् । एवम् 'अतिशयेन क्षुद्रः क्षोदिष्ठः' इति 'स्थूलदूरयुवह्रस्वक्षिप्रक्षुद्राणां यणादिपरं पूर्वस्य च गुणः' ( ६।४।१५६ ) इति इष्ठन्परस्य रेफस्य लोप उकारस्य गुणश्च । एवम् 'अतिशयेन प्रशस्यः श्रेयान्' इति 'अजादी गुणवचनादेव' ( ५।३।५८ ) इति ईयसुन्, 'प्रशस्यस्य श्रः' ( ५।३।६० ) इति आदेशः । यथा च—

आरोहणङ्गदेश्यांस्तुरङ्गरूपस्य दक्षजातीयान् ।

कारयति सज्जनेशः स्वबन्धुजनुषः कुमारकान् यत्नात् ॥

अत्र 'ईषदून आरोहणज्ञः' इति 'ईषदसमाप्तौ कल्पब्देश्यदेशीयरः' ( ५।३।६७ ) इति देश्यप्रत्ययः । एवं 'प्रशस्तस्तुरङ्गः तुरङ्गरूपः' इति 'प्रशंसायां रूपप्' ( ५।३।६६ ) इति रूपप् । एवं 'दक्ष-प्रकारवान् दक्षजातीयः' इति 'प्रकारवचने जातीयर्' ( ५।३।६९ ) इति जातीयर् । एवम् 'अनुकम्पितः कुमारः कुमारकः' इति 'अनुकम्पायाम्' ( ५।३।७६ ) इति कन् । यथा च—

आयातेषु विचक्षणेषु समितौ श्रीसज्जनक्ष्मापतेः
काव्यज्ञः कतरोऽनयोश्च कतमश्चैषां तु नैयायिकः ।
तान्पृच्छन्ति समस्तशास्त्रकवरा इत्यादि भूपाश्रिता
वाकोवाक्यविनिर्णयं प्रकुरुते द्राङ् मेदपाटेश्वरः ॥

अत्र 'अनयोर्द्वयोर्मध्ये क इति कतरः' इति 'किंयत्तदोर्निर्धारणे द्वयोरेकस्य डतरच्' ( ५।३।९२ ) इति डतरच् । एवम् 'एषां बहूनां मध्ये कः कतमः' इति 'वा बहूनां जातिपरिप्रश्ने डतमच्' (५।३।९३) इति डतमच् । 'जातिपरिप्रश्ने' इति प्रत्याख्यातमाकरे । एवं 'समस्त-शास्त्रैर्गर्विताः समस्तशास्त्रकाः' इति 'अवक्षेपणे कन्' ( ५।३।९५ ) इति कन् । एवमन्येऽप्युदाहर्तव्याः । इति प्रागिवीयाः ।

इवार्थश्च समूहार्थो वीप्सार्थोऽनितरार्थकः ।
अभूततद्भावकश्च व्यापनः प्रातिलोम्यकः ॥
एते चान्य इवाद्यर्थकीया, एषु च कन् मतः ।
शाखादिभ्यश्च यः प्रोक्तः, छः समासादिवार्थकात् ॥
अण् चैव शर्करादिभ्योऽङ्गुल्यादिभ्यष्ठगित्यपि ।
त्रिगर्तषष्ठाद्दामन्यादेश्छः सङ्घार्थ ईरितः ॥
स्थूलादिभ्यः प्रकारे कन् , प्राचुर्यप्रस्तुते मयट् ।
देवतान्ताच्च यत् प्रोक्तो विनयादेश्च ठक् स्मृतः ॥
आद्यादिभ्यस्तसिश्चैव, च्विस्तु कृभ्वस्तियोगतः ।

**सातिस्त्रा डाच् तथान्येऽपि प्रातिस्विकतयोदिताः ।**
**इति सङ्क्षेपतः प्रोक्त एष तद्धितसङ्ग्रहः ॥**

यथा--

सूरके तेजसा घस्रे यशसा शशिके निशि ।
सज्जनेन्द्रे सति तयोर्नास्ति किञ्चित् प्रयोजनम् ॥

अत्र 'सूर इव प्रतिकृतिः सूरकः' इति, 'शशीव प्रतिकृतिः शशिकः' इति 'इवे प्रतिकृतौ' ( ५।३।९६ ) इति कन् । यथा च--

लक्ष्यं विध्यन् क्रीडया सज्जनेन्द्रस्तत्रायातो वन्यघृष्टिस्तरस्वी ।
विद्धो भूमौ सम्पपातोद्गतासुर्जातं चित्रं काकतालीयमेतत् (१) ॥

अत्र काकतालशब्दौ काकागमनतालपतनपरौ, तेन 'काकागमनमिव तालपतनमिव काकतालम्' इति इवार्थसमासः । काकतालसमागमसदृशो लक्ष्यवराहसमागम इति समासार्थः । ततः 'काकतालमिव काकतालीयम्' इति 'समासाच्च तद्विषयात्' ( ५।३।१०६ ) इति छप्रत्ययः, छस्य ईयादेशः । तेन तत्प्रयुक्तं काकमरणसदृशं वराहमरणमिति प्रत्ययार्थः । अतर्कितोपनतमिति फलितोऽर्थः । यथा च--

जपपाठमयं यज्ञं कारयित्वा द्विजन्मनः ।
सन्तोषयति दत्वाऽन्नमयं सज्जनभूपतिः ॥

अत्र 'प्राचुर्येण प्रस्तुतौ जपपाठावस्मिन् जपपाठमयः' एवं 'प्राचुर्येण प्रस्तुतमन्नम् अन्नमयम्' इति 'तत्प्रकृतवचने मयट्' (५।४।२१) इति मयट् । यथा च--

श्वेतीकुर्वति यशसा सज्जनसिंहे जगत्, तमिस्रापि ।
ज्योत्स्नीभूता, ज्योत्स्ना दिवसीभूता विभाति पक्षयुगे ॥

अत्र 'अश्वेतं श्वेतं सम्पद्यते तत्कुर्वन्' इति, 'अज्योत्स्नी ज्योत्स्नी

---

(१) कश्चित्संन्यासिवेशो भ्रमति भुवि वदन् 'मूर्तिपूजा न कार्ये'-
त्येवं तस्यागमो योऽभवदुदयपुरे, यश्च मूर्तीः प्रकल्प्य ।
प्रारम्भोऽनुष्ठितीनामुपचितिमद्युक् सज्जनेन्द्रस्य गेहे
तच्चैतत् काकतालीयमुपगतमहो खण्डनं तन्मतस्य ॥

सम्पद्यते ज्योत्स्नीभूता' इति, 'अदिवसो दिवसः सम्पद्यते दिवसीभूता' इति 'कृभ्वस्तियोगे सम्पद्यकर्तरि च्विः' ( ५।४।५० ) इति च्विः । यथा च —

सस्याढ्या सलिलवती या दुष्टैरात्मसात्कृता भूमिः ।
तामादाय बलेन हि विप्रत्रा सज्जनेट् कुरुते ॥

अत्र 'आत्माधीनात्मसात्' इति 'तदधीनवचने' ( ५।४।५४ ) इति सातिप्रत्ययः । एवं 'विप्राधीना विप्रत्रा' इति 'देये त्रा च' ( ५।४।५५ ) इति त्राप्रत्ययः । यथा च--

सज्जनसिंहं तद्गुणसंरक्तः सर्वथाऽनुयायिगणः ।
अनुकूलाचरणेन हि सुखाकरोति प्रियाकरोत्येव ॥

अत्र 'आनन्दयति' इत्यर्थे सुखप्रियशब्दाभ्यां 'सुखप्रियादानुलोम्ये' (५।४।६३ ) इति डाच् । एवमन्येऽप्युदाहार्याः । इति इवार्थाः ।

सज्जनेन्द्रयशोगन्धप्रसारणकरं परम् ।
तद्धितं नाम कुसुमं तृतीयं फुल्लतां ययौ ॥

इति श्रीधर्माधिकारिकृष्णपण्डितविरचिते सज्जनेन्द्र-प्रयोगकल्पद्रुमे तद्धितकुसुमं तृतीयम् ॥

---

## अथ तिङ्कुसुमम् ।

लादेशास्तु तिङः प्रोक्ता लकारास्तु नवैव हि ।
लट्लिट्लुट्लृट्लोट्च लङ्लिङ्लुङ्लृङ्चेति प्रकीर्तिताः॥
अष्टादश तिङस्तिप्तस्झिसिप्थस्थमिपस्तथा ।
वस्मस्ताऽऽतांझथासाथांध्वमिड्वहिमहिङ् इति ॥
परस्मैपदसंज्ञास्तु पूर्वा एषु नवेरिताः ।
उत्तरास्तु नव प्रोक्ता आत्मनेपदसंज्ञकाः ॥
धातुभ्यश्च लकाराः स्युर्धातवस्ते द्विधेरिताः ।
सकर्मकास्तथा कर्मरहिता इति भेदतः ॥

सकर्मकेभ्यः कर्त्रर्थे कर्मार्थे च भवन्ति ते ।
अकर्मकेभ्यो भावार्थे कर्त्रर्थेपि भवन्ति ते ॥
ते पुनर्द्विविधा उक्ता धातवः शब्दवेदिभिः ।
शुद्धाश्चैव सनाद्यन्ताः, शुद्धानां च गणा दश ॥
भ्वाद्योऽदादिर्ह्वादिर्दिवाद्यौ स्वाद्यश्च तुदादिकः ।
रुधादिश्च तनाद्यश्च क्र्यादिश्चैव चुरादिकः ॥

'सन्क्यच्काम्यच्क्यङ्क्यषोऽथाचारक्विब् णिज्यङौ तथा ।
यगाय ईयङ् णिङ् चेति द्वादशामी सनादयः' ॥

दशभ्यो गणधातुभ्यो मध्ये विकरणादयः ।
लट्लोट्लङ्विधिलिङ्क्ष्वेव नान्येषु प्रभवन्ति हि ॥
शब्लुक्श्लुश्यन्श्नुशः श्नम् च उः श्ना णिजिति कर्तरि ।
यगेव भावकर्मार्थे सनाद्यन्तेषु शप् स्मृतः ॥
लुटि तासिर्लृङ्लृटोः स्यः शप्स्थाने च्लिर्लुङि स्मृतः ।
त्रयस्ते पुरुषा ज्ञेया ये त्रिकाश्च तिङां त्रयः ॥
प्रथमो मध्यमश्चैवोत्तमश्चेति तु नामतः ।
मध्यमश्चोत्तमश्चैव कर्त्रर्थे युष्मदस्मदि ॥
कर्त्रर्थ इतरस्मिंस्तु प्रथमः परिकीर्तितः ।
एकद्विबहुसंज्ञानि वचनानि त्रिके त्रिके ॥
प्रत्येकं प्रभवन्तीत्थं, वर्तमाने च लट् स्मृतः ।
भूते लिट्लङ्लुङश्चैव, लुट्लृटौ लृङ् भविष्यति ।
प्रवर्तनाशिषोर्लिङ्लोट्, एष सामान्यसङ्ग्रहः ॥

अत्र दशगणीयप्रथमधातूनां पृथक् पृथग् विकरणप्रदर्शनाय सामान्यतः संक्षेपेण रूपाण्युदाह्रियन्ते । यथा—

त्वद्गेहे भवतीन्दिराऽत्ति मधुरं भूदेवसङ्घो जुहो-
त्यग्नौ होतृगणो हविः, पितृसुरा दीव्यन्ति सुन्वन्ति च ।
सोमं पातुमरींस्तुदन्ति बलिनो रुन्धन्ति तन्वन्ति ते
कीर्तिं सज्जनसिंह ! चोरयति वा क्रीणाति सा स्वःश्रियम् ॥

अत्र अकर्मकभूधातोः 'लः कर्मणि च भावे चाकर्मकेभ्यः' ( ३।४।६९ ) इत्यनेन कर्तरि 'वर्तमाने लट्' ( ३।२।१२३ ) इति लट्-प्रत्ययेऽटोरित्संज्ञालोपे लकारमात्रे 'तिप्तस्झि' (३।४।७८) इत्यनेन एकवचनत्वात्तिपि मध्ये 'कर्तरि शप्' ( ३।१।६८ ) इत्यनेन शपि शकार-पकारयोर्लोपे धातोरूकारस्य 'सार्वधातुकार्धधातुकयोः' ( ७।३।८४ ) इति गुणे अवादेशे 'भवति' इति सिध्यति । एवं साधनप्रक्रिया ग्रन्थ-विस्तरभिया न प्रदर्श्यते । यो यो विशेषः स एव प्रदर्श्यते । तथा 'अत्ति' इति अदधातोस्तिपि 'अदिप्रभृतिभ्यः शपः' ( २।४।७२ ) इति शब्लुक् । अयं सकर्मकः । तथा सकर्मकहुधातोस्तिपि 'जुहोत्यादिभ्यः श्लुः' ( २।४।७५ ) इति श्लुशब्देन शपो लोपे 'श्लौ' (६।१।१०) इत्यनेन धातोर्द्वित्वे 'जुहोति' इति । सकर्मकदिवुधातोर्बहुवचनत्वात् झौ 'झोऽन्तः' ( ७।१।३ ) इति तस्याऽन्तादेशे 'दिवादिभ्यः श्यन्' ( ३।१।६९ ) इति श्यनि शकारनकारयोर्लोपे 'दीव्यन्ति' इति । तथा षुञ्-धातोः षकारस्य 'धात्वादेः षः सः' (६।१।६४) इति सादेशे झौ 'स्वादिभ्यः श्नुः' (३।१।७३) इति श्नौ शकारलोपे 'सुन्वन्ति' इति । तथा तुदधातोर्झौ 'तुदादिभ्यः शः' ( ३।१।७७ ) इति शे 'तुदन्ति' इति । तथा रुधधातोर्झौ 'रुधादिभ्यः श्नम्' (३।१।७८) इति श्नम्, स च मित्त्वादन्त्यादचः परः । नकारस्यानुस्वारे परसवर्णे 'रुन्धन्ति' इति । तथा तनुधातोर्झौ 'तनादिकृञ्भ्य उः' (३।१।७९) इति औ 'तन्वन्ति' इति । तथा चुरधातोस्तिपि 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' ( ३।१।२५ ) इति स्वार्थे णिचि णकारचकारलोपे इकारस्य गुणेऽयादेशे उकारस्यापि गुणे 'चोरयति' इति । अयं शब्विकरणक एव सनाद्यन्तो धातुर्दशगणीयत्वादुदाहृतः । तथा क्रीधातोस्तिपि 'क्र्यादिभ्यः श्ना' ( ३।१।८१ ) इति श्ना, शकारलोपे णत्वे 'क्रीणाति' इति । उदाहरणे लडेव दर्शितः । लिडादीनामुदाहरणानि लकारार्थविशेष-प्रदर्शने कानिचिद् दर्शयिष्यन्ते । अधुना सनाद्यन्तधातूनामर्था उदाहरणानि च सङ्क्षेपतः प्रदर्श्यन्ते ।

गुप्तिज्किद्भ्यान्बधिभ्यो दान्शान्भ्यां स्वार्थे सनिष्यते।
आशंसायां तथेच्छैककर्तृकादीषिकर्मणः ॥
धातोरिच्छार्थके च स्यात् क्यच् काम्यच्च पुनः स्मृतौ ।
मान्तनाम्नोऽव्ययात् क्यच् न काम्यच् भवति निश्चयात् ॥
कर्माधिकरणाभ्यां क्यजाचारे चोपमानतः ।
कर्तुः क्यङ् वा भृशादिभ्यो भवत्यर्थे सलोपकः ॥
डाजन्तात् क्यष् भवत्यर्थे लोहितादिभ्य एव च ।
सत्रात् कक्षात् कष्टकृच्छ्रगहनेभ्यश्चिकीर्षति ॥
पापमर्थे, कष्टशब्दादुत्साहेऽर्थे क्यङिष्यते ।
रोमन्थं वर्तयति च तपश्चरति कर्मणः ॥
बाष्पोष्मफेनाद्वमने, कलहाच्छब्दवैरयोः ।
तथा कण्वाऽभ्रमेघेभ्यः करोत्यर्थे च कर्मणः ॥
सुदिनाद् दुर्दिनान्नीहाराद्भवत्यर्थ एव च ।
सुखादिभ्यस्तथा कर्तृवेदनायां क्यङो विधिः ॥
क्यच् नमोवरिवस्चित्रङः स्यात् , क्विप् नाममात्रतः ।
आचारार्थे च, मुण्डादिसत्यादिभ्यां च णिच्च मतः ॥
प्रयोजकस्य व्यापारे वाच्ये च प्रेषणादिके ।
पौनःपुन्ये भृशार्थे चैकाचो धातोर्हलादितः ॥
सूच्यादेश्च, तथा गत्यर्थेभ्यः कौटिल्य एव हि ।
लुपादेर्भावगर्हायां यङ् , लुक् तस्याचि बाहुलात् ॥
कण्ड्वादिभ्यो यगायस्तु गुपेर्धूपेः पणेः पनेः ।
विच्छेश्च, स्याद् ऋतेरीयङ्, कमेर्णिङ् स्वार्थ एव हि ॥
पुच्छादुदसने पर्यसने च व्यसने भवेत् ।
भाण्डात्समाचयनके, चीवरादर्जने तथा ।
परिधाने, सनाद्यन्ता द्वादशाऽमी प्रकीर्तिताः ॥

यथा--

तितिक्षते विप्रगणं श्रुतीस्तु मीमांसते धित्सति वा मुमूर्षुम् ।

मित्रीयति स्वस्तकिकाम्यतीदं शिवीयति ज्ञं किल सज्जनेन्द्रः ॥

अत्र तिज्धातोः 'गुप्तिज्किद्भ्यः सन्' ( ३।१।५ ) इति सनि 'सनाद्यन्ता धातवः' ( ३।१।३२ ) इति धातुसंज्ञायां लटि द्वित्वे 'तितिक्षते' इति । एवं मान्धातोः 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' (३।१।६) इति सन्। तथा धाधातोः 'धातुमिच्छति' इत्यर्थे 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' ( ३।१।७ ) इति सन् । एवं मित्रशब्दात् 'आत्मनो मित्रमिच्छति' इत्यर्थे 'सुप आत्मनः क्यच्' (३।१।८) इति क्यच्। एवम् 'आत्मनः स्वस्तीच्छति' इत्यर्थे अकजन्तात् 'स्वस्तकी'त्यव्ययात् 'काम्यच्च' (३।१।९) इति काम्यच् । तथा 'शिवमिवाचरति' इत्यर्थे शिवशब्दात् 'उपमानादाचारे' ( ३।१।१० ) इति क्यच् । यथा च—

यः स्वर्गीयति सौधसद्मसु भृशं विद्वस्यते संसदि
प्राज्यं वा सुमनायते चिरतरं हर्षायते पण्डितैः ।
विश्वक्सेनति पालने, रिपुकुलं सन्त्रासयत्युद्धतै-
र्दण्डैः, सज्जनभूपतिः स रुचिमान् बोभूयते सर्वदा ॥

अत्र 'स्वर्गे इवाचरति स्वर्गीयति' इति 'अधिकरणाच्चेति वक्तव्यम्' इति स्वर्गशब्दात् क्यच् । एवं 'विद्वानिवाचरति विद्वस्यते' इति 'कर्तुः क्यङ् सलोपश्च' (३।१।११) इति क्यङ् । एवम् 'असुमनाः सुमना भवति सुमनायते' इति 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' ( ३।१।१२ ) इति क्यङ् । एवं 'हर्षवान् भवति हर्षायते' इति 'लोहितादिडाज्भ्यः क्यष्' ( ३।१।१३ ) इति क्यष् । एवं 'विश्वक्सेनमिवाचरति विश्वक्सेनति' इति 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विप् । एवं 'रिपुकुलं सन्त्रसति, तदयं सन्त्रासयति' इति 'तत्प्रयोजको हेतुश्च' ( १।४।५५ ) इति णिच् । तथा 'पुनः पुनरतिशयेन वा भवति बोभूयते' इति 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' ( ३।१।२२ ) इति यङ् । यथा च—

स सज्जनेन्द्रो वरिवर्ति, यः सदा महीयते राजसु, दुर्गमाहवान् ।
पणायते, क्षुब्धजनानृतीयते, सुधीजनान् कामयते स्वसंसदि ॥

अत्र 'अतिशयेन वर्तते वरिवर्ति' इति 'यङोऽचि च' (२।४।७४) इति यङो लुक्। तथा महीङ्धातोः 'कण्ड्वादिभ्यो यक्' (३।१।२७) इति यक्। पूजां लभते इत्यर्थः। एवं पणधातोः 'गुपूधूपविच्छिपणिपनिभ्य आयः' (३।१।२८) इति आयः स्वार्थे। व्यवहरति स्तौति वेत्यर्थः। तथा ऋतिधातोः 'ऋतेरीयङ्' (३।१।२९) इति स्वार्थे ईयङ्। निन्दति कृपां करोति वेत्यर्थः। एवं कमधातोः 'कमेर्णिङ्' (३।१।३०) इति स्वार्थे णिङ्। इच्छतीत्यर्थः।

अथ लिडादीनामर्थविशेषा उदाहरणानि च प्रदर्श्यन्ते—

**येष्वर्थेषु लकाराः स्युस्ते कथ्यन्ते विशेषतः।**
**भूतानद्यतने चैव परोक्षे लिट् प्रकीर्तितः॥**

यथा—

पपाठ बहुला विद्याः सारं तासां बुबोध (१) च।
आचचार तदुक्तं हि सज्जनेन्द्रो निरालसः॥

अत्र पठबुधचरधातुभ्यः 'परोक्षे लिट्' (३।२।११५) इति लिट्।

**अत्यन्तापह्नवेऽप्येव लङ्लिटौ तु प्रकीर्तितौ।**
**हकारशश्वतोर्योगे प्रश्ने चासन्नकालके॥**

यथा—

त्वं निशि वेशेऽवात्सीरिति पृष्टः सज्जनेन्द्रेण।
नाहं जगाम वेशं योऽवददित्थं स दण्डितस्तेन॥

अत्र गमधातोः 'अत्यन्तापह्नवे लिड् वक्तव्यः' इति लिट्। गमनाभावकथनेन वासस्यात्यन्तगोपनम्। यथा च—

दानादि शश्वदकरोद्व्यवहारमपि ह चकार सज्जनराट् (२)।
तेन चिरायुर्भूत्वा यास्यति लोकान् हि शाश्वतान् दिव्यान्॥

अत्र कृधातोः हकारशश्वच्छब्दयोगे 'हशश्वतोर्लङ् च' (३।२।११६) इति लङ्लिटौ। उभयत्र लिड्लङावपि भवतः। एवमासन्नकाले प्रश्नेऽप्युदाहार्यम्।

---

(१) 'बुध अवगमने' इति भौवादिकाल्लिट्। (२) लोकानाम्।

**भूते लुङ् ननुयोगे तु लट् च पृष्टोत्तरे मतः ।**
**नुनयोगे तु कथितौ लुङ्लटौ च तदर्थके ॥**

यथा--

अकार्षीद्बह्वनुष्ठानान्यभूच्च विपुलं (१) यशः ।
तेनाऽगमच्च विप्रौघः सज्जनेन्द्रस्य सन्निधौ ॥

अत्र कृभूगमधातुभ्यो 'लुङ्' ( ३।२।११० ) इति भूते लुङ् ।

यथा च--

'अकार्षीः किमु भोः ! सन्ध्या'मिति पृष्टोऽवदद्बटुः ।
'सज्जनेन्द्र ! महीपाल ! सम्यङ् ननु करोम्यहम्' ॥

अत्र कृधातोर्ननुशब्दयोगे 'ननौ पृष्टप्रतिवचने' ( ३।३।१२० ) इति भूते लट् । एवं नुशब्दनशब्दयोगेऽपि । तत्र पक्षे लुङपीति बोध्यम् ।

**भूतानद्यतने लङ् च, स्मयोगे लट् प्रकीर्तितः ।**

यथा —

अभवन्मेदपाटेशयशःशुभ्रोऽर्बुदाचलः ।
अतः कैलासबुद्ध्याऽस्मिन्नीलकण्ठः (२) स्म तिष्ठति ॥

अत्र भूधातोः 'अनद्यतने लङ्' ( ३।२।१११ ) इति लङ् । तथा स्मयोगे स्थाधातोः 'लट् स्मे' ( ३।२।११८ ) इति भूते लट् ।

**स्मं विहाय पुराशब्दयोगे प्रोक्तौ तु लङ्लटौ ।**

यथा—

उदयपुरं नामैतद्यथार्थमभवद् , यतो महावीराः ।
भूपा बोभुवति पुरा रविवंश्याः शत्रुतापना अस्मिन् ॥

अत्र 'बोभुवति' इति यङ्लुगन्ताद् भूधातोः पुराशब्दयोगे भूते 'पुरि लुङ् चाऽस्मे' (३।२।१२२) इति लट् , लुङ्लङ्लिटोऽपि ।

**साकाङ्क्षे लङ्लृटावुक्तावभिज्ञावचने बुधैः ।**
**यद्योगेन विनाऽभिज्ञावचने तु लृडेव हि ॥**

---

( १ ) बहुलं । ( २ ) ०न्नेकलिङ्गः ।

यथा—

मित्रं पृच्छति सज्जनक्षितिपतौ 'भो मित्र ! तत् स्मर्यते ?

यद् वत्स्याम उपत्यकासु बहुशो बाल्ये तरक्षून्मृगान् ।

व्याघ्रांस्तत्र किटीन् वृकानपि हनिष्यामः स्वहस्तेन वै'

'राजन् ! स्मर्यत' एवमुत्तरमदाद्वार्ताप्रसङ्गे सखा ॥

अत्र स्मृतिबोधके 'स्मर्यते' इत्युपपदे लक्ष्यलक्षणभावेन धात्वर्थस्य साकाङ्क्षत्वे 'वत्स्यामः, हनिष्यामः' इति वसहनधातुभ्यां 'विभाषा साकाङ्क्षे' (३।२।११४) इति भूते लृट्। वासो लक्षणं हननं लक्ष्यम् । पक्षे लङ्।

**वर्तमाने च लट् प्रोक्तो भविष्यति तु लृट् स्मृतः ।**

यथा—

नयेन वर्तते नित्यं सज्जनः पृथिवीपतिः ।

तेन राज्यं धनं चायुर्वृद्धिमेष्यति सर्वथा ॥

अत्र 'वर्तते' इति वृतधातोः 'एष्यति' इति इण्धातोश्च 'वर्तमाने लट्' (३।२।१२३) 'लृट् शेषे च' (३।३।१३) इत्येताभ्यां लट्लृटौ ।

**लुडनद्यतने ख्यातो भविष्यति, निपातयोः ।**

**यावत्पुराशब्दयोस्तु योगे लट् नान्य एव हि ॥**

**लिप्सायां चैव किंवृत्ते कदाकर्हियुते तथा ।**

**लोडर्थलक्षणे चैव संसिद्धौ लिप्स्यमानतः ॥**

**लट् स्मृतश्च यथाप्राप्तौ लृट्लुटौ परिकीर्तितौ ।**

**ऊर्ध्वमौहूर्तिके काले लोडर्थे लिङ्लटौ तथा ॥**

यथा—

'सज्जनेन्द्रसमीपे तु गमने भविता हि नः ।

मनोरथ' इति स्वान्ते निश्चिन्वन्ति विपश्चितः ॥

अत्र 'भविता' इति भूधातोः 'अनद्यतने लुट्' (३।३।१५)इति लुट् ।

यथा च—

याते सज्जनसिंहभूपनिकषा विद्वद्गणे दूरतः

'कस्मै राति कदा ददाति धन'मित्युत्कण्ठितश्चेतसि ।

वृत्तिं प्रार्पयति स्वराज्यमाधिकं प्राप्नोति चेत्थं वद-
त्यस्मै सत्कृतिपूर्वकं समधिकं यावद्ददाति प्रभुः ॥

अत्र 'राति' इति राधातोः 'किंवृत्ते लिप्सायाम्' ( ३।३।६ ) इति किंशब्दयोगे लिप्सार्थे भविष्यति लट् । एवं कदाशब्दयोगे 'ददाति' इति 'विभाषा कदाकर्ह्योः' ( ३।३।५) इति भविष्यति दाधातोर्लट् । एवम् 'प्रार्पयति' इति अर्पधातोः 'प्राप्नोति' इति आपधातोश्च वृत्तिदानेन स्वराज्यलाभे गम्यमाने 'लिप्स्यमानसिद्धौ च' ( ३।३।७ ) इति भविष्यति लट् । तथा निश्चयार्थकनिपातयावच्छब्दयोगे 'ददाति' इति दाधातोर्भविष्यति लट् । पक्षे यथाप्राप्तौ लृट्लुटौ । एवमन्येऽप्यूह्याः ।

**समीपे वर्तमानस्य भूते वाऽथ भविष्यति ।**
**भूते भूता वर्तमाना भविष्यन्तो भविष्यति ॥**
**वर्तमानाश्च ला उक्ताः,**

यथा--

प्रणिधिः 'कदाऽऽगतोऽसि हि कदा गमिष्यसि पुनस्त्व'मिति पृष्टः ।
कथयति सज्जननरपतिमयमागच्छामि चैष गच्छामि ॥

अत्र आगमनस्य वर्तमानकालिकाऽऽगमनप्रश्नसमीपवर्तित्वात् 'आगच्छामि' इति गमधातोः 'वर्तमानसामीप्ये वर्तमानवद्वा' (३।३।१३१) इति भूते वर्तमानलट् । एवं भविष्यत्कालिकगमनप्रश्नसमीपवर्तित्वात् 'गच्छामि' इति भविष्यति वर्तमानलट् । पक्षे भूतभविष्यन्तौ लङ्लृटावपि ।

**आशंसायां तु लुङ्लृटौ ।**
**लट् चाथो, क्षिप्रपर्याये लृट् स्यादुपपदे किल ॥**
**लिङाशंसावाचिनि चोपपदे गादितस्तथा ।**
**क्रियासातत्यसामीप्ये भूते लुङ् लृट् भविष्यति ॥**
**मर्यादोक्तावहोरात्रभिन्नकालांशके च वै ।**
**अवरस्मिन् लृट्, परस्मिन् लृट्लुटौ च भविष्यति॥**

यथा--

'प्रादाच्चेद्वसुधां हि सज्जननृपो धान्यान्यवाप्स्म क्रमात्
सर्वाणी'ति वदन्ति केचिदपरे 'चेल्लोकयेत् स प्रभुः ।

आशंसामह उन्नतार्थसुखिनो जायेमही'त्थं भृशं
तत्तद्वाञ्छितपूरको विजयते श्रीमेदपाटेश्वरः ॥

अत्र 'प्रादात्' इति 'अवादस्म' इति च सम्भावनाद्योत्ये भविष्यति काले 'आशंसायां भूतवच्च' ( ३।३।१३२ ) इति दाधातोर्वपधातोश्च लुङ् । एवम् 'आशंसामहे' इति सम्भावनावाचिन्युपपदे उक्तेऽर्थे 'लोकयेत, जायेमहि' इति लोकधातोर्जनधातोश्च 'आशंसावचने लिङ्' ( ३।३।१३४ ) इति लिङ् । एवमन्येऽप्युदाहार्याः ।

**सर्वत्र लिङ्निमित्ते तु क्रियाऽनिष्पत्तिसूचने ।**
**भविष्यति लृङेव स्याद्, उताप्योरित्यतः पुरः ॥**
**भूते वा लृङ्, ततोऽग्रे तु नित्यं भूतेऽपि लृङ् भवेत् ।**
**गर्हायां जात्वपियुते लट् च कालत्रये मतः ॥**
**कथंयोगे च गर्हायां कालमात्रेऽपि लिङ्लटौ ।**
**अन्येऽपि स्वस्वकाले स्युर्लकारास्तत्र चैव हि ॥**
**किंवृत्ते गर्हणे प्रोक्तौ लिङ्लृटौ, तद्विनापि च ।**
**क्षमासम्भावनार्थेऽथो तयोरेव तु सूचने ।**
**अस्त्यर्थे किंकिलार्थे च लृडेव परिकीर्तितः ॥**

यथा--

सज्जनसिंहो नृपतिश्चेदगमिष्यद्वनेषु मृगयायै ।
हिंसकलुण्ठकतस्करनाशोऽप्यभविष्यदाशु शिष्टोऽपि ॥

अत्र हेतुहेतुमद्भावे द्योत्ये 'अगमिष्यत् , अभविष्यत्' इति । 'लिङ्निमित्ते लृङ् क्रियाऽतिपत्तौ' ( ३।३।१३९ ) इति लृङ् ।

यथा च--

श्रीमत्सज्जनसिंहभूपतिलके सिंहासनाधिष्ठिते
'त्वं रे ! गच्छसि जातु वारवनितां, धर्मं कथं त्वं त्यजेः ।
को वा पास्यति वारुणीं, परधनं नो मर्षये त्वं हरे'-
रित्यादीनि वचांसि वक्तुमुचितो नो याति तत्संसदि ॥

अत्र जातुयोगे 'गच्छति' इति गर्हायां गमधातोः कालत्रये 'गर्हायां लडपिजात्वोः' ( ३।३।१४२ ) इति लट् । एवं कथंयोगे 'त्यजेः' इति उक्तार्थे त्यजधातोः 'विभाषा कथमि लिङ् च' ( ३।३। १४३ ) इति लिङ् । तथा 'पास्यति' इति किंवृत्ते उक्तार्थे पाधातोः 'किंवृत्ते लिङ्लृटौ' ( ३।३।१४४ ) इति लृट् । एवं 'हरेः' इति क्षमार्थे उपपदे 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' ( ३।३।१४५ ) इति लिङ् ।

**यच्चयत्रयदाजातुयदियद्युजि लिङ् मतः ।**
**यच्चयत्रयुते चैव चित्रीकरणके तथा ॥**
**गर्हायां तु लिङेवाऽर्थादधिकोक्तौ न लिङ् भवेत् ।**
**लृट् स्यादुपपदे यच्चयदियत्रविभिन्नके ॥**
**विस्मयीकरणे चाथो,**

यथा—

प्राज्यं धनं प्रदद्युर्यच्चान्ये भण्डमल्लकितवेभ्यः ।
न श्रद्धत्ते सज्जनभूपो यवनीं यदीयुस्ते ॥

अत्र यच्चयोगे गर्हायां 'प्रदद्युः' इति 'यच्चयत्रयोः' (३।३।१४८) इति लिङ् । एवं यदियोगे 'इयुः' इति 'यदायद्योरुपसंख्यानम्' इति इण्धातोर्लिङ् । यथा च—

उत्कण्ठितो नियुद्धे निपातयेदेष कुशतरो मल्लः ।
पीवरबाहुं यच्चाश्चर्यं तद्वदति सज्जनेन्द्र इति ॥

अत्र यच्चयोगे आश्चर्ये द्योत्ये 'निपातयेत्' इति पतधातोः 'चित्रीकरणे च' (३।३। १५०) इति लिङ् ।

**उताप्योस्तु समर्थयोः ।**
**योगे लिङ्, इत ऊर्ध्वं तु भूतेऽपि नियतो हि लृङ् ।**

यथा—

मेदपाटे व्रजाशु त्वं यदीच्छसि धनाढ्यताम् ।
सज्जनः पृथिवीजानिरपि हन्याद्दरिद्रताम् ॥

अत्र अपियोगे बाढार्थे 'हन्यात्' इति हनधातोर्भूते 'उताप्योः समर्थयोः' (३।३।१५२) इति लिङ् ।

**कच्चिद्योगं विना स्वाभिप्रायाविष्करणे तु लिङ् ।**

यथा--

'भवान् भुञ्जीत, मे कामो' वदन्तीत्थं सदैव हि ।
सज्जनेन्द्रप्रकृतयो दृष्टमात्रे तु भूसुरे ॥

अत्र 'भुञ्जीत' इति भुजधातोः स्वाभिप्रायप्रकाशने द्योत्ये 'कामप्रवेदनेऽकच्चिति' ( ३।३।१५३) इति भूते लिङ् ।

**सिद्धाप्रयोगे प्रौढ्यर्थे लिङ् च सम्भावने मतः ।**
**तत्रैव सम्भावनार्थे धातावुपपदेऽपि च ।**
**यद्योगरहिते लिङ् स्याद्यथाप्राप्तश्च लृट् तथा ॥**

यथा--

दीर्घपीनायतभुजः सज्जनेन्द्रो विराजते ।
तेन सम्भावयामीत्थं 'दोर्भ्यामेव हरिं जयेत्' ॥

अत्र 'सम्भावयामि' इति धातावुपपदे प्रौढ्यर्थे सम्भावनेऽर्थे 'जयेत्' इति जिधातोः 'विभाषा धातौ सम्भावनवचनेऽयदि' (३।३।१५५ ) इति भूते लिङ् ।

**हेतुहेतुमतोर्लिङ् च भविष्यति मतो बुधैः ॥**

यथा--

'दद्याच्चेत् सज्जनेन्द्रो मे यायाद्दारिद्र्यमाजनि' ।
मेदपाटं व्रजन् कश्चिन्मनस्येवमचिन्तयत् ॥

अत्र 'दद्यात् यायात्' इति दानदारिद्र्यगमनयोर्हेतुहेतुमद्भावे दायाधात्वोः 'हेतुहेतुमतोर्लिङ्' ( ३।३।१५६ ) इति भविष्यति लिङ् ।

**इच्छार्थके तूपपदे स्वाभिप्रायप्रकाशने ।**
**प्रैषादिविध्याद्यर्थे च मुहूर्तादूर्ध्वके तथा ॥**
**आशीरर्थे च लिङ्लोटौ, योग्यशक्यार्थके त्वथो ।**
**यच्छब्दोपपदे काले वेलायां समयेऽपि च ॥**
**समानकर्तृकेच्छार्थोपपदेऽपि लिङेव हि ।**
**समानकर्तृकेच्छार्थोपपदे वर्तमानके ॥**

**इच्छार्थे लट्लिङौ च, स्मयोगे चाऽधीष्टके तथा ।**
**प्रैषाद्यर्थे प्राप्तकाले मुहूर्तोर्ध्वे स्मयोगके ।**
**लोट्, माङ्युपपदे लुङ् स्यात्, स्मोत्तरे लङ्लुङौ मतौ॥**

यथा--

वाक्यं काव्यकृतो- 'नरेन्द्र ! शृणु मे श्लोका'निति प्रार्थये
श्रुत्वैवं शृणुयामितीच्छति, तथा वक्तीति 'संश्रावयेः ।
मा कार्षीः प्रविलम्ब'मित्यनुदिनं श्रीसज्जनक्ष्मापतिः
कुर्वन् विप्रवचांसि सौख्यमतुलं गृह्णाति भूयादिति ॥

अत्र 'प्रार्थये' इति इच्छार्थकोपपदे स्वाभिप्रायप्रकाशने 'शृणु' इति श्रुधातोः 'इच्छार्थेषु लिङ्लोटौ' (३।३।१५७) इति लोट् । एवम् 'इच्छति' इति एककर्तृकेच्छार्थोपपदे 'शृणुयाम्' इति श्रुधातोः 'लिङ् च' ( ३।३।१५९ ) इति लिङ् । तथा प्राप्तकालार्थे 'संश्रावयेः' इति । श्रुधातोः 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' ( ३।३।१६१ ) इति लिङ् । एवं माङुपपदे 'कार्षीः' इति कृधातोर्लुङ् । एवमन्येऽप्युदाहार्याः ।

**तिङ्वाच्यायाः क्रियायास्तु प्राधान्यादनुरोधतः ।**
**तथा गुणक्रियावाचिशब्देभ्यः प्रत्यया मताः ॥**

यथा--

आशीर्वादं ददत्येवं सज्जनेन्द्राय भूसुराः ।
'सर्वभूमेस्तु साम्राज्यं कुर्वन् पुत्रो भविष्यति' ॥

अत्र 'भविष्यति' इति तिङ्वाच्यभवनक्रियायाः प्राधान्यात् 'कुर्वन्' इति कृत्प्रत्ययवाच्यक्रियाया गौणत्वात् प्रधानक्रियानुरोधेन 'कुर्वन' इति भविष्यति वर्तमानकृत्प्रत्ययः ।

**पौनःपुन्ये भृशार्थे च लोट् स्यात् हिस्वौ ततो न तिङ् ।**
**अनुप्रयोगो धातोश्च तद्बोधार्थं ततो मतः ।**
**लोटः प्रकृतिभूतोऽसौ, विकल्पेन समुच्चये ॥**

यथा--

सज्जनसिंहः प्रधने स याहि याहीति याति भटपुरतः ।
एनं बधान, शस्त्रं हराऽस्य, चैनं जहीति जयति रिपून् ॥

अत्र पुनः पुनरतिशयेन वा याने बोध्ये 'याहि याहि' इति याधातोः 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' (३।४।२) इति लोट्, तस्य 'हि' आदेशः। 'क्रियासमभिहारे द्वे वाच्ये' इति द्वित्वम्। 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' (६।४।४) इति लोट्प्रकृतियाधातोरनुप्रयोगः, तस्मात्तु तिप्। इतिशब्दस्त्वभेदान्वयबोधकः। एवं बन्धनं हरणं हननमिति अनेकक्रियासमुच्चितजये द्योत्ये 'समुच्चयेऽन्यतरस्याम्' (३।४।३) इति विकल्पेन लोटि 'हि'आदेशः। पक्षे लट्। 'जयति' इति 'समुच्चये सामान्यवचनस्य' (३।४।५) इति सामान्यस्य जिधातोरनुप्रयोगः।

**मन्योपपदकाद्धातोर्मध्यमः पुरुषो भवेत्।**
**मन्येतस्तूत्तमः प्रोक्तः स चैकार्थस्य वाचकः॥**

यथा––

राठोरभूपालसुताविवाहे श्रीसज्जनेन्द्रं जगदुर्नताङ्ग्यः।
'नाहं ग्रहीष्यस्यमुमेव हारं मन्ये त्वमित्थं हि स एव लभ्यः॥

अत्र 'ग्रहीष्यसि, मन्ये' इति प्रहासे द्योत्येऽस्मच्छब्दयोगेऽपि मन्यधातुरुपपदं यस्य तादृशाद् ग्रहधातोः, युष्मच्छब्दयोगेऽपि मन्यधातोः 'प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च' (१।४।१०६) इति मध्यमोत्तमपुरुषौ मन्यतेरेकवचनं च।

**भावकर्मव्यवस्था तु व्यवस्था कर्तृकर्मणः(१)।**
**तथाऽऽत्मनेपदस्यापि परस्मैपदकस्य च॥**
**व्यवस्था मूलतो ज्ञेया विस्तरान्नेह कथ्यते।**

---

(१) अयमत्र सङ्ग्रहः—

भावार्थेऽकर्मकाद्धातोः कर्मार्थे च सकर्मकात्।
उभाभ्यामेव धातुभ्यां कर्त्रर्थे प्रत्यया मताः॥
धातुलादेशयोर्मध्ये यकारो भावकर्मणोः।
लट्लोट्लङ्विधिलिङ्क्षु स्यात्, सर्वत्रैवात्मनेपदम्॥
धातोरन्त इकारश्च लादेशो लुप्यते तथा।
लुङ्येकवचने, कर्मकर्तर्यप्येवमेव हि॥

लट्यात्मनेपदं बोध्यमेकारान्तं विचक्षणैः ॥
परस्मैपदमाख्यातमिकारान्तं तथा लटि ।
इति सङ्क्षेपतः प्रोक्त एष तिङ्सङ्ग्रहः किल ॥
सज्जनेन्द्रयशोगन्धप्रसारणकरं परम् ।
एतत् तिङ्कुसुमं चारु चतुर्थं फुल्लतां दधौ ॥

इति श्रीधर्माधिकारिकृष्णपण्डितविरचिते सज्जनेन्द्र-
प्रयोगकल्पद्रुमे तिङ्कुसुमं चतुर्थम् ॥

## अथ कृत्कुसुमम् ।

धातोः कृत्प्रत्यया बोध्याः कर्त्रादित्रितयार्थके ।
भूतादिकालत्रितये निरूप्यन्ते समासतः ॥
कृत्याः खलर्थाः क्तश्चापि सकर्मभ्यस्तु कर्मणि ।
अकर्मकेभ्यो भावे स्युः, कर्तरि प्रत्ययाः परे ॥
अर्हशक्यार्थयोः प्रैषे प्राप्तकालातिसर्गयोः ।
भवन्ति प्रत्ययाः कृत्यास्तृजर्हार्थे तथेष्यते ॥
तव्यत्तव्याऽनीयरस्तु धातुभ्यः केलिमर् भवेत् ।
पवर्गान्ताददुपधादजन्ताद् यत् शकेः सहेः ॥
एतिस्तुशास्वृदृजुषः क्यप् स्याद् ऋदुपधादपि ।
आवश्यके उकारान्ताण्ण्यद् ऋकारहलन्ततः ॥

---

भाववाच्यप्रयोगे च तृतीया कर्तृकारके ।
क्रियैकवचनान्तैव प्रथमे पुरुषे भवेत् ॥
कर्मवाच्यप्रयोगे तु तृतीया कर्तृकारके ।
प्रथमान्तं भवेत्कर्म कर्माधीनं क्रियापदम् ॥
कर्तृवाच्यप्रयोगे हि प्रथमा कर्तृकारके ।
द्वितीयान्तं भवेत्कर्म कर्त्रधीनं क्रियापदम् ॥
कर्तृवाच्याः प्रयोगास्तु दशगण्यां प्रपञ्चिताः ।
कर्मकर्तृप्रयोगे तु कर्तरि प्रथमा भवेत् ॥

यथा—

जेतव्यो रिपुवर्गश्चयनीयोऽर्थो भिदेलिमं पापम् ।
कार्यो धर्मो लभ्यं ज्ञानं चेत्येव सज्जनेशमतिः ॥

अत्र अर्हाद्यर्थे 'जेतव्यः, चयनीयः' इति जिचिधात्वोः 'तव्यत्-तव्यानीयरः' ( ३।१।९६ ) इति तव्यानीयरौ । एवं 'भिदेलिमम्' इति भिदूधातोः 'केलिमर उपसंख्यानम्' इति केलिमर् । तथा 'कार्यः' इति कृधातोः 'ऋहलोर्ण्यत्' ( ३।१।१२४ ) इति ण्यत् । एवं 'लभ्यम्' इति लभधातोः 'पोरदुपधात्' ( ३।१।९८ ) इति यत् ।

**ण्वुल्तृचौ सर्वधातुभ्यो, नन्दिग्रहिपचादितः ।**
**ल्युणिन्यचः क्रमात्, कस्तु ज्ञाप्रीगुपधकात्किरः ॥**
**उपसर्गे तथाऽऽदन्तात्, पाघ्राध्माधेड्दृशस्तु शः ।**
**ज्वलादिभ्यः कसन्तेभ्यः श्यैङादिभ्यस्तु णः स्मृतः ॥**
**प्रुसृल्वः साधुकारित्वे वुन् स्यादाशिषि सर्वतः ।**
**कर्मण्युपपदे ह्वावामश्चाऽण्, अनुपसर्गतः ॥**
**सुबन्ते वा उपपदे आदन्तात्कः समीरितः ।**
**गापाभ्यां नोपसृष्टाभ्यां टक्, हृञोऽनुद्यमेऽच् स्मृतः॥**

यथा—

धर्ता भूवलयस्य दुःखदमकः कृत्यैः प्रजारञ्जनः
स्थायी संसदि देवपूजनरतो विप्रप्रियः सत्यवाक् ।
चारैः पश्य उदारधीः सुलवकोऽरीणां नृपाराधितः
श्रेयश्चार उपायविद्विजयते श्रीसज्जनाधीश्वरः ॥

अत्र कर्त्रर्थे धरतीति 'धर्ता' इति धृधातोः, दमयतीति 'दमकः' दम्धातोः 'ण्वुल्तृचौ' ( ३।१।१३३ ) इति तृच्ण्वुलौ । एवं रञ्जयतीति 'रञ्जनः', तिष्ठतीति 'स्थायी', दीव्यतीति 'देवः' इति रञ्जस्थादिव्-धातुभ्यो 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' ( ३।१।१३४ ) इति क्रमात् ल्युः णिनिः अच् प्रत्ययः । एवं प्रीणातीति 'प्रियः' इति 'इगुपधज्ञाप्री-किरः कः' ( ३।१।१३५ ) इति कः । एवं चरन्तीति 'चाराः' इति

'ज्वलितिकसन्तेभ्यो णः' ( ३।१।१४० ) इति णः । तथा पश्यतीति 'पश्यः' इति 'पाघ्राध्माधेड्दृशः शः' ( ३।१।१३७ ) इति शः । एवं साधु लुनातीति 'सुलवकः' इति 'प्रुसृल्वः समभिहारे वुन्' (३।१।१४९) इति वुन् । तथा नॄन् पातीति 'नृपः' इति 'आतोऽनुपसर्गे कः' ( ३। २।३ ) इति कः । एवं श्रेयश्चरतीति 'श्रेयश्चारः' इति 'कर्मण्यण्' ( ३। २।१ ) इति कर्मोपपदेऽण् ।

**शेतेरच् चाऽधिकरणे, चरेष्टोऽपि कृञस्तु सः ।**
**हेतुताच्छील्यानुलोम्ये कर्त्रर्थे पूर्ववत् स्मृतः ॥**
**ण्यन्तादेजेः खशन्येभ्योऽप्ययं, प्रियवशे वदः ।**
**खच् भुवः करणे भावे ह्याशितोपपदे च सः ॥**
**कृञः क्षेमे प्रिये मद्रे खजणौ स्तो, गमेस्तु खच् ।**
**अन्ताद्युपपदे डश्च, क्विन् स्पृशोऽनुदके सुपि ॥**
**क्विन्नन्ता ऋत्विगाद्याः स्युरज्ञानार्थाद् दृशेस्तु कञ् ।**
**क्विन् च त्यदाद्युपपदे,**

यथा—

नीतिर्यस्य यशस्करी रिपुगणः शैलेशयो, मानिनः
सर्वे यस्य वशंवदा, भवति चोग्रंपश्य आलोकिते ।
यस्मिन् दुष्टजनः सतां सुगसदा मन्त्रस्पृगस्ते च यः
स श्रीसज्जनभूपतिर्जयति, नो भूमौ नृपस्तादृशः ॥

अत्र हेतौ द्योत्ये यशः करोतीति 'यशस्करी' इति 'कृञो हेतुताच्छील्यानुलोम्येषु' ( ३।२।२० ) इति टः । एवं शैले शेते इति 'शैलेशयः' इति 'अधिकरणे शेतेः' ( ३।२।१५ ) इति अच् । 'शयवासवासिष्वकालात्' ( ६।३।१८ ) इति सप्तम्या अलुक् । तथा वशं वदन्तीति 'वशंवदाः' इति 'प्रियवशे वदः खच्' ( ३।२।३८ ) इति खच् । एवम् उग्रं पश्यतीति 'उग्रंपश्यः' इति 'उग्रंपश्येरंमदपाणिन्धमाश्च' ( ३।२।३७ ) इति खशन्तो निपातितः । तथा सुखेन गच्छत्यस्मिन्निति 'सुगम्' इति 'अन्तात्यन्ताध्वदूरसर्वानन्तेषु डः'

( ३।२।४८ ) इति सूत्रे 'सुदुरोरधिकरणे' इति डः । सुगं सदो यस्येति राज्ञो विशेषणम् । एवं मन्त्रेण स्पृशतीति 'मन्त्रस्पृक्' इति 'स्पृशोऽनुदके क्विन्' ( ३।२।५८ ) इति क्विन् । तथा तत्तुल्यः 'तादृशः' इति 'त्यदादिषु दृशोऽनालोचने कञ् च' ( ३।२।६० ) इति कञ् ।

**ण्विः सोपपदकाद्भजेः ॥**

**मनिन्क्वनिप्वनिप्विच्क्विप् धातोः स्युः, स्थस्तु कक्विपौ ।**
**अजात्यर्थे सुपि णिनिस्ताच्छील्येऽथ व्रतेऽपि च ।**
**उपमाने तथा कर्तर्याभीक्ष्ण्ये बहुलं च सः ॥**

यथा--

'षष्ठांशभाक् सुकृतदुष्कृतयोर्नृपोऽस्ती'-
त्येवं विचार्य नयवर्त्म विदाशुधीवा ।
धर्मे प्रजारनुदिनं व्यवहारदर्शी
संयोजयन् जयति सज्जनसिंहभूपः ॥

अत्र षष्ठांशं भजतीति 'षष्ठांशभाक्' इति भजधातोः सुप्युपपदे 'भजो ण्विः' ( ३।२।६२ ) इति ण्विः । एवं वर्तत इति 'वर्त्म' इति वृतधातोः 'अन्येभ्योऽपि दृश्यन्ते' (३।२।७५) इति मनिन् । तथा वेत्तीति 'वित्' इति 'क्विप् च' (३।२।७६) इति क्विप् । एवम् आशु ध्यायतीति 'आशुधीवा' इति ध्यैधातोः 'अन्येभ्योऽपि दृश्यन्ते' ( ३।२।७५ ) इति वनिप् । दृशिग्रहणात् सम्प्रसारणम् । तथा व्यवहारं पश्यति तच्छीलो 'व्यवहारदर्शी' इति दृशधातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' (३।२।७८) इति णिनिः ।

**इतः स्युः प्रत्यया भूते, णिनिः स्यात्करणे यजः ।**
**हनः कर्मणि च, क्विप् तु ब्रह्मणि भ्रूणवृत्रयोः ॥**
**अग्नेश्चिञः कृञः पुण्यपापमन्त्रसुकर्मसु ।**
**दृशेः क्वनिप् जनेर्डः स्यादन्येभ्योऽन्यार्थकेऽपि च ॥**

यथा--

अग्निचितो द्विजवर्यान् कर्मकृतः सोमयाजिनोऽन्यांश्च ।
श्रुतिपारदृश्वनोऽपि प्रपूजयति वृत्रहेव सज्जनराट् ॥

अत्र अग्निं चितवानिति 'अग्निचित्' इति 'अग्नौ चेः' (३।२।९१) इति क्विप् । द्विर्जायत इति 'द्विजः' इति 'अन्येभ्योऽपि दृश्यते' (३।२।१०१) इति जनेर्डः । तथा कर्म कृतवानिति 'कर्मकृत्' इति 'सुकर्मपापमन्त्रपुण्येषु कृञः' (३।२।८९) इति क्विप् । एवं सोमेनेष्टवानिति 'सोमयाजी' इति 'करणे यजः' (३।२।८५) इति णिनिः । तथा श्रुतिपारं दृष्टवानिति 'श्रुतिपारदृश्वा' इति 'दृशेः क्वनिप्' (३।२।९४) इति क्वनिप् । एवं वृत्रं हतवानिति 'वृत्रहा' इति 'ब्रह्मभ्रूणवृत्रेषु क्विप्' (३।२।८७) इति क्विप् ।

**कर्तरि क्तवतुर्भूते, भूते क्तो भावकर्मणोः ।**
**स्पष्टार्थोक्तानुवादोऽयमथ क्तस्त्वादिकर्मणि ॥**
**गत्यर्थाकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यः कर्मणि कर्तरि ।**
**भावे, तथाऽधिकरणे ध्रौव्यगत्यशनार्थकात् ॥**
**मतिबुद्ध्यर्चनाद्यर्थधातुभ्यो, ञीत एव च ।**
**वर्तमानार्थके क्तः स्यात्, क्लीबे भावे तु सर्वदा ॥**

यथा—

यो विद्याः सुविदितवान् कलाश्च सर्वा,
राज्ञीयाऽऽसित उपविष्टमर्पितं च ।
विप्रेभ्यो धनमपि येन, स त्विदानीं
भूपानां नरपतिसज्जनोऽर्चितश्च ॥

अत्र विवेदेति 'विदितवान्' इति 'निष्ठा' (३।२।१०२) इति विद्धातोः क्तवतुः । आसते स्म राजानोऽस्मिन्निति 'आसितम्' इति आसधातोः 'क्तोऽधिकरणे च ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' (३।४।७६) इति ध्रौव्यार्थेऽधिकरणे क्तः । एवम् 'उपविष्टम्' इति विशधातोर्भावे क्तः । एवम् 'अर्पितम्' इति कर्मणि क्तः । तथा अर्च्यत इति 'अर्चितः' इति वर्तमाने क्तः ।

**लिटः कानचक्वसू धातोः, क्वसुः सद्वसश्रुवः ।**
**इति भूताधिकारोऽभूत्,**

यथा—

देवाननूचानमुखान् द्विजव्रजान्
संपूज्य मान्यांश्च मुदा निषेदुषि ।
सिंहासने सज्जनसिंहवर्मणि
प्रादुर्बभूवुः सहसा सुवृष्टयः ॥

अत्र वेदस्यानुवचनं कृतवन्त इति 'अनूचाना' इति 'उपेयिवाननाश्वाननूचानश्च' (३।२।१०९) इति वचधातोर्निपातितः कानच् । तथा निषसादेति 'निषेदिवान्'इति सद्धातोः 'भाषायां सदवसश्रुवः' (३।२।१०८) इति क्वसुः ।

**लटः स्तः शतृशानचौ ।**
**सम्बोधने क्रियायास्तु हेत्वर्थाल्लक्षणार्थकात् ।**
**एष्वर्थेषु लटस्तौ स्तः प्रायश्चान्यत्र च क्वचित् ।**
**चानश् भवेत्तु ताच्छील्यवयोवचनशक्तिषु ॥**

यथा—

बिभ्राणः कुतुकेन लौहकवचं संयाति सैन्यान्वितः
सामन्तैश्च तथैव वर्म रुचिरं संधारयद्भिः समम् ।
प्रत्यक्षं नगराद्बहिः पुरजनैरालोक्यमानस्ततो
'द्राक् सम्राड् भविते'ति सज्जननृपो मन्ये हनिष्यन् रिपून्॥

अत्र बिभर्तीति 'बिभ्राणः' इति भृधातोः 'ताच्छील्यवयोवचनशक्तिषु चानश्'(३।२।१२९)इति चानश् । एवं धारयन्तीति 'धारयन्तः' इति धृधातोः 'लटः शतृशानचावप्रथमासमानाधिकरणे' ( ३।२।१२४ ) इति शतृप्रत्ययः । तथा आलोक्यत इति 'आलोक्यमानः' इति लोकधातोस्तेनैव शानच् । एवं 'हनिष्यन्' इति हनधातोः 'लटः सद्वा' ( ३।३।१४ ) इति शतृप्रत्ययः ।

**इतः क्विबन्तं तच्छीले तद्धर्माणि च कर्तरि ।**
**तत्साधुकारिणि तथा प्रोच्यन्ते प्रत्ययाः पुरः ॥**
**तृन् सर्वेभ्यः, सम्पृचादिशम्यादिभ्यो घिनुण् मतः ।**

हलादेरनुदात्तेतः, शब्दार्थाच्चलनार्थकात् ॥
अकर्मकाद्, अयान्ताच्च ज्वादिभ्यश्चैव युच् स्मृतः ।
उः सनाशंसभिक्षिभ्यः, क्विप् सर्वेभ्योऽपि दृश्यते ॥
इष्णुच् क्नुग्स्नुवुञः षाकन्नुकञालुजिनिः क्मरच् ।
घुरच् कुरच् क्वरप् रो रूक्क आरुर्नजिङ् नरच् ॥
डुः ष्ट्रन्नित्रः क्रुक्लुकनौ भवन्त्येते पृथक् पृथक् ।
प्रत्यया भिन्नधातुभ्यो विज्ञेया मूलतः खलु ॥

यथा—

भूभर्ता धर्मरागी गिरिवदचलनो नीतितो वेदतत्त्वं
जिज्ञासुर्भीरुरक्षी परपुरगृहयालुः शरारू रिपूणाम् ।
रोचिष्णुर्जागरूकः श्रुतिविमुखधियां निन्दकश्चारनेत्रो
धृष्णक् श्रीसज्जनेन्द्रो जगति विजयते जित्वरः शम्भुभक्तः॥

अत्र बिभर्तीति 'भर्ता' इति भृधातोः 'तृन्' ( ३।२।१३५ ) इति तृन् । एवं रज्यतीति 'रागी' इति रञ्जधातोः 'सम्पृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च' (३।२।१४२) इति घिनुण् । तथा चलतीति 'चलनः' इति 'चलनशब्दार्थादकर्मकाद्युच्' इति ( ३।२।१४८ ) इति युच् । एवं ज्ञातुमिच्छुः 'जिज्ञासुः' इति ज्ञाधातोः 'सनाशंसभिक्ष उः' (३।२।१६८) इति उः । तथा बिभेतीति 'भीरुः' इति भीधातोः 'भियः क्रुक्लुकनौ' ( ३।२।१७४ ) इति क्रुः । एवं गृह्णातीति 'गृहयालुः' इति ग्रहधातोः 'स्पृहिगृहिपतिदयिनिद्रातन्द्रश्रद्धाभ्य आलुच्' (३।२।१५८) इति आलुच् । तथा शृणातीति 'शरारुः' इति 'शॄवन्द्योरारुः' ( ३।२।१७३ ) इति आरुः । एवं रोचत इति 'रोचिष्णुः' इति रुचधातोः 'अलंकृञ्निराकृञ्प्रजनोत्पचोत्पतोन्मदरुच्यपत्रपवृतुवृधुसहचर इष्णुच्' (३।२।१३६ ) इति इष्णुच् । तथा जागर्तीति 'जागरूकः' इति जागृधातोः 'जागरूकः' (३।२।१६५) इति ऊकः । एवं निन्दतीति 'निन्दकः' इति निन्दधातोः 'निन्दहिंसक्लिशखादविनाशपरिक्षिपपरिरट

परिवादिभ्याभाषासूञो वुञ्' ( ३।२।१४६ ) इति वुञ्' । तथा नयत्यनेनेति 'नेत्रम्' इति नीधातोः 'दाम्नीशसयुयुजस्तुतुदसिसिचमिहपतदशनहः करणे' ( ३।२।१८२ ) इति ष्ट्रन् । एवं धृष्णोतीति 'धृष्णक्' इति धृषधातोः 'स्वपितृषोर्नजिङ्' ( ३।२।१७२ ) इति सूत्रे 'धृषेश्चेति वाच्यम्' इति नजिङ् । तथा जयतीति 'जित्वरः' इति जिधातोः 'इण्नशजिसर्तिभ्यः क्वरप्' ( ३।२।१६३ ) इति क्वरप् । एवं शं भवतीति 'शम्भुः' इति 'विप्रसंभ्यो ड्वसंज्ञायाम्' ( ३।२।१८० ) इति सूत्रे 'मितद्र्वादिभ्य उपसंख्यानम्' इति डुः ।

**वर्तमाने तथा भूते बहुलं स्युरुणादयः ।**

यथा--

सज्जननृपतिः साधुषु दाशेषु वदान्य इति गमी सौख्यम् ।
भीमो जयत्यसाधुषु, ततो गमी शक्रपदमचलम् ॥

अत्र दाशन्ति तस्मै 'दाशः' इति, गमिष्यतीति 'गमी' इति, बिभ्यति तस्मात् 'भीमः' इति सम्प्रदानभविष्यदपादानेषु 'दाशगोघ्नौ सम्प्रदाने' (३।४।७३) 'भविष्यति गम्यादयः' (३।३।३) 'भीमादयोऽपादाने, (३।४।७४) इति सूत्रैः क्रमेण दाशृधातोः सम्प्रदाने पचाद्यच्, गमधातोः भविष्यति इनिः, भीधातोः मप्रत्ययसन्नियोगेन वैकल्पिकः षुक् च निपात्यन्ते । सम्प्रदानापादानाभ्यामन्यत्र साध्नोति परकार्यं 'साधुः' इति साधधातोः 'कृवापाजिमिस्वदिसाध्यशूभ्य उण्' इत्युणादिसूत्रेण उण् । एवमन्येऽप्युणादयो मूलतो बोध्याः ।

**तुमुन्ण्वुलौ क्रियार्थायां क्रियायां, केवलस्तुमुन् ।**
**समानकर्तृकेऽस्त्यर्थे कालादौ च शकादिके ।**
**पूर्णतावाचिसामर्थ्यवाचिन्युपपदे भवेत् ॥**

यथा--

व्यवहारान् स्वयं द्रष्टुं याति नित्यं सदस्यहो ! ।
गूढं तमपि विज्ञातुं प्रवीणः सज्जनाधिपः ॥

अत्र दर्शनक्रियार्थयानक्रियायां सत्यां दृशधातोः 'तुमुन्ण्वुलौ

क्रियायां क्रियार्थायाम्' (३।३।१०) इति तुमुन् । ण्वुल् तु प्रागुदाहृतः । एवं सामर्थ्यवाचिनि 'प्रवीणः' इत्युपपदे ज्ञाधातोः 'पर्याप्तिवचनेष्वलमर्थेषु' ( ३।४।६६ ) इति तुमुन् ।

**भावे इत्यधिकृत्योक्तास्ते भाववचनाः स्मृताः ।**
**क्रियार्थायां क्रियायां तु घञाद्याः स्युर्भविष्यति ॥**
**अण् च कर्मण्युपपदे, घञ् कर्तरि पदादितः ।**
**भावे च सर्वधातुभ्यो नाम्न्यकर्तरि कारके ॥**
**अजेदन्ताद्धातुतश्चाऽप् ऋकारान्तादुदन्ततः ।**
**क्वचिद्भावे च करणे कर्मण्यपि मतः क्वचित् ॥**

यथा--

वर्षे वर्षे प्रकृतिषु सुखोत्पत्तये सज्जनेन्द्रः
सेनायुक्तो गिरिषु च यदा हिंस्रलावोऽभियाति ।
यान्ति स्वैरं सपदि भयतः पादमूलं किराता
हस्ते कृत्वा करमभिमतं प्रोद्गिरन्तः स्तवांश्च ॥

अत्र हिंस्रानिति कर्मण्युपपदे तल्लवनक्रियार्थायां यानक्रियायां लूञ्-धातोः 'अण् कर्मणि च' (३।३।१२) इति अण् । एवं भीतिः 'भयम्' इति भीधातोर्भावे 'एरच्' ( ३।३।५६ ) इति अच् । तथा पद्यतेऽसौ 'पादः' इति पदधातोः कर्तरि 'पदरुजविशस्पृशो घञ्' ( ३।३।१६ ) इति घञ् । एवं करणं 'करः' बलिरित्यर्थः, कृधातोर्भावे, स्तवनं 'स्तवः' इति स्तुधातोश्च 'ऋदोरप्' ( ३।३।५७ ) इति अप् ।

**ड्वितः क्त्रिश्च ट्वितोऽथुच् च,**

यथा--

उपवनमुपयाते सज्जनेन्द्रे कदाचित्
कुसुमचयनकाले पवित्रमं लातुकामे ।
फलमपि, मरुता सा वेपथुं प्राप्य 'शोभा
मम न हि हरणीया' दाडिमीत्थं प्रवक्ति ॥

अत्र पाकेन निर्वृत्तं 'पवित्रमम्' इति पचधातोः 'ड्वितः क्त्रिः' (३।३।८८) इति क्त्रिः। एवं वेपनं 'वेपथुः' इति 'टूवितोऽथुच्' (३।३।८९) इति अथुच्।

**यजादिभ्यश्च नङ् स्मृतः।**
**उपसर्गे च घोः किः स्यात्, कर्मण्युपपदे तथा।**
**आधारे, चाथ भावादौ स्त्रियां क्तिन् परिकीर्तितः॥**

यथा—

सलिलधिपारेऽपि गता ह्ययत्नतः सज्जनेन्द्रनृपकीर्तिः।
क्वचिदपि नान्तर्धिमगात् परम्परातस्तदीयकृत्यानाम्॥

अत्र सलिलानि धीयन्तेऽस्मिन्निति 'सलिलधिः' इति धाधातोः सलिलानीति कर्मण्युपपदे अधिकरणे 'कर्मण्यधिकरणे च' (३।३।९३) इति किः। एवं यतनं 'यत्नः' इति यत्धातोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्' (३।३।९०) इति भावे नङ्। तथा कीर्तनं 'कीर्तिः' इति कॄधातोः 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' (३।३।९७) इति स्त्रियां क्तिन् निपातितः। एवम् अन्तर्धानम् 'अन्तर्धिः' इति 'उपसर्गे घोः किः' (३।३।९२) इति किः।

**क्यप् भावे तु व्रजयजोः, संज्ञायां समजादितः।**
**प्रत्ययान्ताद्धलन्ताच्च गुरोरश्च मतः स्त्रियाम्।**
**भिदादिभ्यः षितश्चाऽङ् स्यात्, ण्यासश्रन्थो युजित्यपि॥**

यथा—

यदूहया दोषमृजा जिज्ञासा तस्य धारणा।
जायते सज्जनेन्द्रे तु समज्यायां निषेदुषि॥

अत्र ऊहनम् 'ऊहा' इति गुरुमतो हलन्तात् ऊहधातोः 'गुरोश्च हलः' (३।३।१०३) इति अः। एव मार्जनं 'मृजा' इति मृज्धातोः 'षिद्भिदादिभ्योऽङ्' (३।३।१०४) इति अङ्। तथा ज्ञातुमिच्छा 'जिज्ञासा' इति सन्प्रत्ययान्तात् ज्ञाधातोः 'अ प्रत्ययात्' (३।३।१०२) इति अः। एवं धारणं 'धारणा' इति ण्यन्तात् धृधातोः 'ण्यासश्रन्थो

युच्' ( ३।३।१०७ ) इति युच् । तथा समजन्त्यस्यां सा 'समज्या' इति सम्पूर्वात् अजधातोः 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' ( ३।३।९९ ) इति क्यप् ।

अर्हणोत्पत्तिपर्यायार्थेषु ण्वुच् परिकीर्तितः ।
भावे नपुंसके ल्युट्क्तौ, कर्मण्युपपदे तथा ॥
कर्तुः कायसुखं येन संस्पर्शाल्ल्युट् ततः स्मृतः ।
करणे चाधिकरणे, संज्ञायां प्रायशस्तु घः ॥
हलन्ताद्धातुतो घञ् स्यात्, कृच्छ्राऽकृच्छ्रार्थकेषु तु ।
भावे कर्मण्युपपदेष्वीषद्दुःसुषु खल् मतः ॥
कर्मकर्त्रोर्भूकृञोः स्याद्, आदन्ताच्चैव युच् मतः ।
आवश्यकाधमर्णार्थे णिनिः, कृत्याश्च कीर्तिताः ॥

प्रागिति शेषः ।

नाम्नि धातोराशिषि च क्तिच्क्तौ च परिकीर्तितौ ।

यथा--

गुणाकरः कलारामः प्राप्तराजाऽग्रगामिकः ।
सज्जनेन्द्रो यतस्तस्य न किञ्चिदिह दुष्करम् ॥

अत्र आकुर्वन्त्यस्मिन् 'आकरः' इति कृधातोः 'पुंसि संज्ञायां घः प्रायेण' ( ३।३।११८ ) इति घः । एवम् आरमन्तेऽस्मिन् 'आरामः' इति रम्धातोः 'हलश्च' ( ३।३।१२१ ) इति घञ् । तथा अग्रे गमनम् 'अग्रगामिका' इति गम्धातोः क्रमार्थे 'पर्यायार्हर्णोत्पत्तिषु ण्वुच् ( ३।३।१११) इति ण्वुच् । एवं कृच्छ्रेण क्रियते 'दुष्करम्' इति कृधातोः 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' (३।३।१२६)इति खल् । अन्ये प्रत्यया अर्थान्तरे प्रागुदाहृताः ।

अलङ्खल्वूपपदयोर्निषेधे क्त्वा प्रकीर्तितः ।
एककर्तृकयोर्धात्वर्थयोः क्त्वा पूर्वकालके ।
अर्थेऽस्मिन्नेव चाभीक्ष्ण्ये णमुल् धातोः प्रकीर्तितः ॥

यथा—

अलं दत्त्वेति नो वक्ति कदाचित् सज्जनाधिपः ।
विचार्य कुरुते कार्यं स्मारं स्मारं गुरोर्गिरः ॥

अत्र निषेधार्थकाऽलंयोगे 'दत्त्वा' इति दाधातोः 'अलङ्खल्वोः प्रतिषेधयोः प्राचां क्त्वा' (३।४।१८) इति क्त्वा । एवं विचारकरणरूपयोर्धात्वर्थयोरेककर्तृकत्वात् 'विचार्य' इति पूर्वकालक्रियार्थकविपूर्वकचरधातोः 'समानकर्तृकयोः पूर्वकाले' ( ३।४।२१ ) इति क्त्वा । तस्य 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' ( ७।१।३७ ) इति ल्यबादेशः । तथा अस्मिन्नेवार्थे पौनःपुन्ये च द्योत्ये स्मृधातोः 'आभीक्ष्ण्ये णमुल् च' (३।४।२२) इति णमुल् ।

**कर्मोपपद आक्रोशे गम्ये चैव खमुञ् मतः ।**
**समूलादिप्रयोगेषु धातुतश्च कषादितः ॥**
**स्वानुप्रयोगयुक्ताच्च,**

यथा —

कश्चिच्चौरङ्कारं कदाचिदाक्रोशति प्राज्ञम् ।
तं द्राग्वस्तग्राहं गृह्णाति खलं हि सज्जनेन्द्रभटः ॥

अत्र चौरेतिकर्मण्युपपदे भर्त्सने गम्ये 'चौरङ्कारम्' इति कृधातोः 'कर्मण्याक्रोशे कृञः खमुञ्' ( ३।४।२५ ) इति खमुञ् । एवं हस्तशब्दप्रयोगेऽर्थादुपपदे 'हस्तग्राहम्' इति स्वानुप्रयोगयुक्तात् ग्रहधातोः 'हस्ते वर्तिग्रहोः (३।४।३९) इति णमुल् ।

**करणे कर्तृकर्मणोः ।**
**अपादानेऽधिकरणे तथा चोपपदे णमुल् ।**
**द्वितीयायां तृतीयां सप्तम्यां च क्वचिद्भवेत् ॥**
**अर्थेषु विविधेष्वेव विविधोपपदेषु च ।**
**धातुभ्यो विविधेभ्यश्च णमुल् ज्ञेयो हि मूलतः ।**
**इत्थं समासतः प्रोक्तो बालानां सुखसिद्धये ॥**
**सङ्ग्रहः कारकादीनां तेन तुष्यतु सज्जनः ॥**

यथा--

धनपोषं स पुष्णाति सर्वविद्याविशारदान् ।
अतस्तं सज्जनेशानमेकलिङ्गेश्वरोऽवतात् ॥

अत्र धनेनेति करणोपपदप्रयोगे 'धनपोषम्' इति स्वस्यानुप्रयोगयुक्तात् पुषधातोः 'स्वे पुषः' (३।४।४०) इति णमुल् । एवमन्येऽप्यूह्याः ।
इति कृत्प्रत्ययाः ॥

सज्जनेन्द्रयशोगन्धप्रसारणकरं परम् ।
एतत् कृत्कुसुमं रम्यं पञ्चमं पुल्लतां ययौ ॥

**इति धर्माधिकारिकृष्णपण्डितविरचिते सज्जनेन्द्रप्रयोगकल्पद्रुमे** कृत्कुसुमं पञ्चमम् ॥



# उपसंहारः ।

पूर्वं श्रीभोजराजोऽभवदतुलगुणो दत्तवान् श्लोकमात्रे
लक्षं, नासौ परीक्ष्याऽगुणमपि च गुणं केवलं दानशूरः ।
एष श्रीसज्जनेन्द्रः सकलविधगुणान् संपरीक्ष्य प्रदत्ते
वर्णे वर्णे च लक्षं कृतिकृतिषु तथा वृद्धये सद्गुणानाम् ॥
राजानः सन्ति भूमौ विपुलधनयुताः शास्त्रवार्ताविहीनाः
केचिद्वेश्यानुरक्ता मधुमदनिरताः केचनाऽऽखेटसक्ताः ।
केचिन्म्लेच्छाऽतिसक्ताः श्रुतिमतविमुखा नास्तिकाः केचनान्ये
दोषो नैकोऽपि दृष्टः श्रुति विमलमतौ सज्जनेन्द्रे गुणाढ्ये ॥

प्रतिग्रहकृतिं विना शिवपुरेऽल्पवृत्त्याऽपि वा
भवेद्धि मणिकर्णिकापयसि सर्वनित्यक्रिया ।
इतीप्सितसुपूर्तिकृन्नृपतिसज्जनान्नेतरो
निधाय मनसीदृशं प्रभुसमीपमेवाऽव्रजम् ॥
भूलोके सज्जनेन्द्रो रविकुलतिलको वर्णनीयश्च नेता
धीरोदात्तोऽस्य नूनं भवतु गुणगणः स्थास्नुराचन्द्रतारम् ।
सर्वेषां श्लोकमात्रप्रपठनसमये कीर्तनात्तद्गुणानां
कीर्तिर्याथार्थ्यमाप्नोत्विति मनसि निधायैष यत्नः कृतोऽत्र ॥
सम्मुखधृत्यनपेक्ष्ये स्थायिन्याकल्पमुज्ज्वले रम्ये ।
वाङ्मय आदर्शेऽस्मिन् जयतु श्रीसज्जनेन्द्रगुणबिम्बम् ॥
संवद् ग्रहगुणनन्दाचला(१९३९)मिते, शरदि बाहुले मासे ।
असिते पक्षे करभे द्वादश्यां भूमिसुतदिवसे ॥
कारकसमासतद्धिततिङ्कृतकुसुमैः सुगन्धिभिः फुल्लैः ।
भवति स्म सज्जनेन्द्रप्रयोगकल्पद्रुमः पूर्णः ॥



**समाप्तश्चायं सज्जनेन्द्रप्रयोगकल्पद्रुमः ।**



॥ श्रीः ॥

## सज्जनेन्द्रप्रयोगकल्पद्रुमान्तर्गतानां कारिकाणाम्

# अकाराद्यनुक्रमणिका ।

# श्लोकानां वर्णक्रमानुसारि

# सूचीपत्रम् ।

# शुद्धिपत्रम् ।

| अशुद्धम् | शुद्धम् | पृष्ठम् | पङ्क्तिः |
|---|---|---|---|
| सम्प्रदानक | सम्प्रदानके | ७ | २८ |
| क्रियास्ति भवतीति | क्रियास्तिभवतीति | १३ | १७ |
| जाहियुक्तं | जाहियुक्ते | १९ | ७ |
| सम्प्रदानकार्थ | सम्प्रदानार्थक | २३ | ९ |
| सज्ञन | सज्जन | २४ | २१ |
| ०मनुकानम् | ०मनुकाननम् | ३९ | १५ |
| ०ममद्या० | ०मभद्या० | ४७ | ३ |
| कालाद्यर्थाः | कालार्थाः | ५५ | ९ |
| काले दा सदा | काले सदा | ५५ | २३ |
| वम्मम् | वसूमस् | ५९ | २१ |
| महिङ् इति | महिङ्ङिति | ,, | ,, |
| मूचने | सूचने | ६८ | १५ |
| इति । | इति | ६८ | २० |
| याहि' | याहीति याति' | ७२ | १ |
| तन्द्रत्श्रद्धाभ्य | तन्द्राश्रद्धाभ्य | ७९ | २१ |
| श्रुति विमल | श्रुतिविमल | ८५ | १९ |

| | | |
|---|---|---|
| कारककुसुमम् | समासकुसुमम् | २९, ३१, ३३, ३५, ३७, ३९, |
| कारककुसुमम् | तद्धितकुसुमम् | ४१, ४३, ४५, ४७, |

७१ (१) ब्रह्मसूत्रशाङ्करभाष्यम् । चतुःसूत्र्यन्त पूर्णानन्दीय व्याख्यया सहितया श्रीगोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम् । द्वितीयाध्यायस्य द्वितीयपादान्तो प्रथमोभागः । [ वेदान्तविभागे ९ ] रु० २—८

७१ (२) ब्रह्मसूत्रशाङ्करभाष्यम् । श्री गोविन्दानन्द प्रणीतया रत्नप्रभया समन्वितम् । द्वितीयाध्यायस्य तृतीयपादमारभ्य समाप्तिपर्यन्तम् । द्वितीयोभागः । [ वेदान्त वि० ९ ] रु०२—८

७२ [१]-सिद्धान्तशिरोमणिः । श्रीभास्कराचार्य विरचितः । "गणिताध्यायः" वासनाभाष्य सहितः ज्योतिषाचार्य म० म० श्री ६ मह्नापूदेवशास्त्रिकृतटिप्पणी सहितः । [ ज्यो० वि० ४ ] रु० २—०

७२-[२]-सिद्धान्तशिरोमणिः । " " "गोलाध्यायः" वासनाभाष्य सहितः । ज्योतिषाचार्य म० म० श्री ६ मह्नापूदेवशास्त्रि कृत टिप्पणी सहितः । [ ज्यो० वि० ४ ] रु० २—०

७३ काकचण्डीश्वरकल्पतन्त्रम् । पण्डित रामकृष्ण शर्म्मणा सम्पादितम् । पण्डित बटुकनाथ शर्म्मा एम. ए. साहित्योपाध्याय इत्येतेन लिखितया प्रस्तावनया सनाथीकृतम् । [ आयुर्वेद शास्त्रविभागे १ ] रु० ०—८

७४ किरातार्जुनीयम् । श्रीमत्कविकुलचूडामणिभारविविरचितम् मल्लिनाथसूरिकृतया घण्टापथसमाख्यव्याख्यया तथा पं० श्रीगङ्गाधरशर्मणा कृतया सुधाऽऽख्यव्याख्यया समलङ्कृतम् । [ सर्गत्रयमात्रम् ] । [ काव्य वि० १० ] रु० ०—१२

७५ चन्द्रालोकः । पीयूषवर्षश्रीजयदेवकवि प्रणीतः । श्रीमत्पद्मनाभमिश्रापराभिधान प्रद्योतनभट्टाचार्य विरचितया चन्द्रालोकप्रकाशापराख्य 'शरदागम' टीकया सङ्कलितः । साहित्याचार्येण खिस्ते इत्युपाख्यनारायणशास्त्रिणा भूमिकादिभिः सम्भूष्य सम्पादितः । [ अलङ्कार वि० ३ ] रु० ०—१०

७६ किरातार्जुनीयम् । श्रीमत्कविकुलचूडामणिभारविविरचितम् । मल्लिनाथसूरिकृतया घण्टापथसमाख्यया तथा पं० श्रीकनकलालशर्मणा कृतया भावार्थदीपिनीव्याख्यया समलङ्कृतम् । [ सर्गत्रयमात्रम् ] [ काव्य वि० ११ ] रु० ०—६

७७ शक्तिवादः, श्रीगदाधरभट्टाचार्यप्रणीतः, पण्डितप्रवरश्रीहरिनाथतर्कसिद्धान्तभट्टाचार्यविरचितविवृतिसहितः । [ न्यायविभागे १० ] रु० ३—०

७८ माथुरीपञ्चलक्षणी । पं श्रीउमानाथज्यौलकृतव्याख्या सहिता तथा माथुरीसिंहव्याघ्रलक्षणम् । पं० श्रीहरिरामशुक्ल विरचितया व्याख्यया सहितं तथा पं० श्रीहरिहरशास्त्रि सङ्कलित माथुरीपञ्चलक्षणी क्रोडपत्रेण च । [न्याय वि० ११] रु० ०—६

७९ रसाध्यायः । टीकया संवलितः । [ आयुर्वेदशास्त्र वि० २ ] रु० ०—१०

८० (१) पाणिनिव्याकरणे वादरत्नम् । न्यायव्याकरणाचार्य मीमांसक शिरोमणि पं० सूर्यनारायणशुक्लेन विरचितम् । ( तत्र च न्यास परिष्कारपरिशिष्ट भेदेन प्रकरण त्रयम् यत्र पञ्चन्यून सार्धशतसूत्रेषु १४९ महताटोपेन न्यासविचारतः तत्र प्रथमं प्रकरणं मुद्रितं प्रथमो भागः । [ व्या० वि १० ] रु० १—८

८० (२) पाणिनीव्याकरणे वादरत्नम् । द्वितीयोभागः [ न्या० वि० ] रु० १—४

८१ गणितकौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितगणितसंग्रहपुस्तकम् । [ गणितविभागे १ ] रु० ०—६

८२ छन्दः कौमुदी । [ हिन्दीभाषाटीकासहिता ] प्रथमापरीक्षापाठ्यनिर्द्धारितछन्दसंग्रहपुस्तकम् । [ छन्दोविभागे ३ ] रु०

८३ योगदर्शनम् । महर्षिप्रवरपतञ्जलिप्रणीतम् । तत्र ( १ ) भोजवृत्तिः, [ २ ] भावागणेशवृत्तिः, [३] नागोजीभट्टवृत्तिः, [४] मणिप्रभा, [५] योगचन्द्रिका, [६] योगसुधाकराख्य टीका षट्कसमेतः [illegible] टिप्पण । [ योग० विभागे १ ] रु

८४ रघुवंशमहाकाव्यम् । श्रीकालिदासविरचितम् । म० म० मल्लिनाथकृत सञ्जीविनीटीका तथा परीक्षोपयोगि सुधाऽऽख्यव्याख्या सहितः। १ से ५ सर्गः मूल्यम् रु० १-४-० तथा १ से ५ सर्गः रु० १—८ तथा ६ से १० सर्गः रु० १—८

८५ योगदर्शनम् । पं० श्रीबलदेवमिश्रकृत योगसूत्रप्रदीपिकाख्यव्याख्यया सहितम् । सटिप्पण । [ योग वि० ४ ] २—०

८६ काव्यमीमांसा । राजशेखरविरचिता । साहित्याचार्य पं० श्रीनारायणशास्त्रि खिस्ते कृत काव्यमीमांसा—चन्द्रिका टीका सहित [ १ से ९ अध्याय ] प्रथमो- भागः । [ काव्यविभागे १३ ] रु० ०—८

८७ नागानन्दनाटकम् । श्रीहर्षदेवप्रणीतम् । काशीविश्वविद्यालयाध्यापकेन ग्रा० प० साहित्याचार्य पण्डित श्री बलदेव उपाध्यायेन स्वप्रणीतया भावार्थदीपिकाख्यया व्याख्यया समलङ्कृत्य बृहत् भूमिका हिन्दीभाषानुवादादिभिः सनाथीकृत्य सम्पादितम् । [ नाटक विभागे १ ] रु० १—४

८८ मेघदूतकाव्यम् । महाकवि श्रीकालीदास विरचितम् । मल्लिनाथकृत सञ्जीविन्या, चारित्रवर्द्धनाचार्य विरचित चारित्रवर्द्धिन्या तथा साहित्याचार्य पं० श्री नारायण- शास्त्री खिस्तेकृत भावप्रबोधिनीव्याख्या टिप्पण्या च सहितम् । [काव्य० १४] रु० ०—८

८९ जागदीशीव्यधिकरणम् । न्यायाचार्यश्रीशिवदत्तमिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितम् । ( न्यायविभागे १२ ) रु० २—०

९० काव्यकल्पलतावृत्तिः । श्रीअमरचन्द्रयतिनिर्मिता अरिसिंहकृतसूत्रसहिता । ( अलङ्कारविभागे ४ ) रु० १—४

९१ [१] वैयाकरणसिद्धान्तचन्द्रिका । श्रीरामाश्रमप्रणीता । श्रीसदानन्दकृत-सुबोधिन्या, श्रीलोकेशकरकृत-तत्त्वदीपिकया व्याख्यया च सहिता । पं० श्रीनवकिशोर- शास्त्रिणानिर्मितया चक्रधराख्य महत्या टिप्पण्या अव्ययार्थमालया च सहिता । पूर्वार्द्धम् । ( व्या० वि० ११ ) रु० २—८

९१-[२] वैयाकरणसिद्धान्तचन्द्रिका । „ „ सुबोधिन्या तत्त्वदीपिका- व्याख्यया चक्रधराख्य-टिप्पण्या लिङ्गानुशासनप्रक्रियया उणादिकोषेण च सहिता । उत्तरार्द्ध । ( व्या० वि० ११ ) रु० २—८

९२ त्रिपुरारहस्यम् ( महात्म्यखण्डम् ) साङ्ख्ययोगशास्त्राचार्य श्रीमुकुन्दलाल शा शास्त्रिणा संशोधितम् । साहित्याचार्य खिस्ते-इत्युपाख्य पं० श्रीनारायणशास्त्रिणा निबद्धाभ्यां भूमिकाऽध्यायानुक्रमणिकाभ्यां च सहितम् ।(पुराणेतिहास वि०१) रु० ५—०

९३ आपस्तम्बधर्मसूत्रम् । श्रीमद्धरदत्तमिश्र विरचितया उज्ज्वलाख्यया वृत्त्या संवलितम् । ( कर्मकाण्डविभागे ७ ) रु० ४—०

९४ अवच्छेदकत्वनिरुक्तिः । श्रीजगदीशतर्कालङ्कारकृताः । न्यायाचार्य श्रीशिवदत्त- मिश्रविरचित गंगाख्यव्याख्या टिप्पणी सहितः । ( न्याय वि० १३ ) रु० १—४

९५ संस्कारदीपकः । गणेशपूजादिग्रहयागान्त-पूर्वाङ्ग—निरूपणात्मकः प्रथमो भागः । म० म० पण्डित श्रीनित्यानन्दपन्त पर्वतीयविरचितः । ( कर्मकाण्ड वि० ८ ) रु० २—०

९६ वर्षकृत्यदीपकः । कालनिर्णयव्रतोद्यापनसहितः । म० म० पं० नित्यानन्दपन्त पर्वतीय विरचितः । ( कर्मकाण्ड वि० ९ ) रु० ३—८

९८ नलचम्पूः अथवा दमयन्तीकथा । महाकविश्रीत्रिविक्रमभट्टविरचिता । विषमपद- प्रकाशाख्यव्याख्यया सहिता । भावबोधिनी टिप्पणी सहिता । (का० वि०१६) रु० १-४

९९ श्रीब्रह्मसूत्रम् । श्रीभगवन्निम्बार्क महामुनीन्द्रविरचित वेदान्तपारिजात सौरभा- ख्यसूत्रवाक्यार्थक श्रीश्रीनिवासाचार्यचरणप्रणीत श्रीवेदान्तकौस्तुभभाष्येन च सनाथीकृतम् । ( श्रीनिम्बार्कभाष्यम् ) ( वेदान्त वि० १० ) रु० ३—०